जिज्ञासा–

# उपासनास्वातन्त्र्यम्

**महेश्वरे वा जगताम् अधीश्वरे**
**जनार्दने वा जगदन्तरात्मनि।**
**न वस्तुभेदप्रतिपत्तिरस्ति मे**
**तथापि भक्तिस्तरुणेन्दुशेखरे।।**

**– भर्तृहरिः**

कविः भर्तृहरिः वदति– "देवः एकः एव, तस्य नामानि तु भिन्नानि इति तत्त्वम् अहं जानामि। अतः एव हरे हरौ परे ब्रह्मणि वा मम समानं गौरवम्। तथापि तरुणेन्दुशेखरे परमेश्वरे भक्तिः तु अधिका" इति।

'किम् एतत् विचित्रम्? यः देवस्य एकत्वं तत्त्वतः जानाति सः कस्मिंश्चित् देवे भक्त्यतिशं यं कथं प्रदर्शयितुम् अर्हति? परस्परं विरुद्धं खलु एतत्?' इति भासेत कदाचित्। वस्तुतः विचार्यमाणे न विरोधः। तद्यथा–

सिद्धान्तः द्विविधः भवति प्रायः। एकः तर्कसिद्धः, अपरः अनुभवसिद्धः। तत्त्वचिन्तनकाले तर्कः आश्रियते, ज्ञेयस्य तत्त्वस्य स्पष्टावगत्यै एतत् अत्यावश्यकम्। किन्तु मनस्तृप्त्यर्थम् इष्टदेवस्य स्तुतिः आराधनं वा क्रियते।

तत्त्वकुतूहलिनां विषये वेदवेदाङ्गादिभिः प्रदर्शितः परमानुग्रहः नाम अभिरुचिस्वातन्त्र्यम्।

तत्त्वप्राप्तिः नाम तत्त्वानुभवः, अनुसन्धानम्। अनुसन्धानार्थं श्रद्धा आवश्यकी। यत्र अभिरुचिः तत्र श्रद्धा सुलभतया भवति। अत एव तत्त्वानुसन्धानार्थम् अभिरुचिस्वातन्त्र्यं सर्वप्रथमं भवेत्।

अभिरुचिस्वातन्त्र्यम् उपासनास्वातन्त्र्यम् अङ्गीकरोति। अतः एव तत्त्वार्थानुसन्धानं कर्तुम् उद्युक्तः अपि कश्चित् भगवद्रूपविशेषे यदि विशेषभक्तिमान् स्यात् तर्हि तत्र न कश्चित् दोषः।

– (डि.वि.जि. महोदयस्य जीवनधर्मयोगग्रन्थतः)

जिज्ञासा –

# कर्मविचारः मिलति, प्रतिष्ठते इत्यत्र

शिष्यः- श्रीमन्! गत्यर्थकः धातुः प्रादेशिकभाषायाम् अकर्मकः चेत् अपि संस्कृते सकर्मकः। एतादृशाः एतद्विपरीतरूपेण स्थिताः वा (तन्नाम प्रादेशिकभाषायां सकर्मकाः चेदपि संस्कृते अकर्मकाः) सन्ति वा?

आचार्यः- एकः एव धातुः अर्थभेदेन कारणान्तरेण वा संस्कृते एव सकर्मकत्वम् अकर्मकत्वम् उभयम् अपि प्राप्नोति। एवं स्थिते भाषाभेदेन सकर्मकाकर्मकत्वं परिवृत्तं चेत् न तत्र आश्चर्यम्। एवं खलु?

शि - व्यवहारसन्दर्भे एतद्विषये दोषाः यथा न भवेयुः तथा जागरूकताश्रयणार्थं पृष्टं मया – तादृशः सन्दर्भविशेषः अस्ति वा? इति।

आ - अवश्यं ज्ञातव्याः तादृशाः सन्दर्भविशेषाः केचन सन्ति एव। द्वित्राणि उदाहरणानि यथा–

i) 'मिल'धातुः संस्कृतेन अकर्मकः।

उदा– (अ) गङ्गा यमुनया मिलति। (आ) अहं मित्रेण मिलामि।

ii) 'क्रीड्' धातुः अपि अकर्मकः।

रामः कन्दुकेन क्रीडति।

शि - श्रीमन्! अहं रामं मिलामि इति न वक्तव्यं वा? अद्यावधि अहम् एवम् एव वदन् आसम्।

आ - अतः एव मया विशिष्य उक्तम्। अहं रामं मिलामि इति तु दोषाय एव।

शि - किं श्रीमन्, एवम्.....?

आ - किं वा कर्तुं शक्यते? भाषामर्यादा तथा अस्ति। सर्वे प्राचीनाः प्रयोगाः अपि तस्य धातोः अकर्मकत्वम् एव वदन्ति। अतः प्रामाण्यं विना प्रादेशिकभाषामर्यादां मनसि कृत्वा अकर्मकत्वेन तस्य प्रयोगं कर्तुं न अर्हामः। यतः संस्कृते अस्मदादीनां प्रयोगाः, प्रादेशिकभाषामर्यादा वा प्रमाणं न।

शि - 'भवान् मिलतु' 'अहं मिलामि' 'सः मिलितवान्' इत्यादिषु प्रयोगेषु कृतेषु .....?

आ - न कोऽपि दोषः। यतः तत्र तृतीयाविभक्त्यन्तस्य पदस्य अध्याहारः क्रियते। ययोः मेलनं भवति तयोः अन्यतरस्य ग्रहणं करणीयं वाक्ये। तदा अध्याहारः तु तृतीयाविभक्त्यन्तेन कर्तुं शक्यते। द्वयोः अपि उपादाने एकं पदं प्रथमाविभक्त्यन्तम्, अपरं च तृतीयाविभक्त्यन्तम् अवश्यं भवेत्।

मिलधातुविषये अन्यदपि स्मर्तव्यं यत् 'आपणे वस्तु मिलति' इति प्रयोगः असाधुः एव। मिलधातोः प्राप्त्यर्थकत्वं न,अपि तु सङ्गमनार्थकत्वम्। अतः 'आपणे वस्तु लभ्यते/प्राप्यते' इत्येव प्रयोक्तव्यम्। (एतच्च वाक्यं कर्मणिप्रयोगे अस्ति।)

शि - श्रीमन्! 'प्रतिष्ठते' इति क्रियापदम् अकर्मकम्, उत सकर्मकम्?

आ - किमर्थं भवतः मनसि तादृशः सन्देहः उत्पन्नः?

शि - 'प्र' इति उपसर्गेण युक्तः ष्ठाधातुः आत्मनेपदित्वं प्राप्नोति, अकर्मकं च भवति, गतेः आरम्भः तस्य अर्थः इति मया कुत्रचित् पठितम् आसीत्।

आ - भवता यत् ज्ञातं तत् युक्तम् एव अस्ति। 'प्रतिष्ठते' इति अकर्मकम् एव।

शि - किन्तु मेघदूते 'चित्रकूटं प्रतस्थे' इति प्रयोगः दृश्यते खलु? अत्र तु सकर्मकत्वं सुस्पष्टम् एव।

आ - वस्तुतः प्रस्थानक्रियायाः अकर्मकत्वम् एव। अत्र तु प्रतस्थे इत्यस्य केवलं प्रस्थानं न अर्थः, अपि तु गतिः अर्थः। गत्यर्थकस्य सकर्मकत्वम् अस्ति एव। एतादृशम् उदाहरणान्तरं यथा–

भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम्।। –(रघु-१२/१०४)

शि - श्रीमन्! एतादृशाः विषयाः ज्ञातव्याः एव वा?

आ - यथा स्फुरति तथा व्यवहारः इति तु सामान्यं चिन्तनम्। यथा वक्तव्यं तथा वदामि इति तुं लक्ष्यं स्यात्। तद्दृष्ट्या एतादृशं ज्ञानम् अपेक्षितम् एव। भाषायां प्रगतिः खलु निरन्तरं साधनीया?



# चन्दमामा

नवम्बर्-१९८८

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ३-००

वार्षिकं ग्राहकशुल्कं रू. ३६-००




# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

**व्या**करणशास्त्रस्य येषां विशेषपरिचयः अस्ति– तन्नाम ये सिद्धान्तकौमुदीं, काशिकाम्, अष्टाध्यायीं वा पठितवन्तः – तेषां मनसि कश्चन सन्देहः भवेत् एव– 'एकैकस्यापि विषयस्य एतावन्तः नियमाः अपवादाः च दृश्यन्ते! एवं स्थिते शुद्धया संस्कृतभाषया व्यवहर्तुं बुद्धिमता अपि किं, शक्यम्?' इति।

पाणिनेः पूर्वं विशालः वाग्व्यवहारः आसीत्, यस्य च अन्वाख्यानार्थं तेन तावन्तः नियमाः करणीयाः अभवन्। तत्तदंशसम्बद्धान् नियमबहिर्भूतान् अंशान् सः अपवादरूपेण अन्वाख्यातवान्। नियमानां वैपुल्यं दृष्ट्वा वयं भीताः भवामः। सर्वान् नियमान् पृथक् पृथक् पठन्तः वयम् तेषु कीदृशी एकसूत्रता अस्ति इति न चिन्तयामः एव। प्रायः सर्वेषु अपि अंशेषु काचित् एकसूत्रता भवति एव। सारभूतां तां जानीमः चेत् स च विषयः ८०% ज्ञातः इव। अपवादांशेषु अपि सर्वे व्यवहारे न सन्ति। केचन अतीव अप्रसिद्धाः, विशिष्टे सन्दर्भे केवलं प्रयुज्यन्ते।

तादृशान् विहाय सामान्यान् नियमान् प्रमुखान् अपवादान् च परिशील्य सारभूतः एकसूत्रतांशः गृहीतः चेत् पुनः कदापि तद्विषये प्रमादः न भवति। अस्पष्टं ज्ञाताः एव अंशाः अस्मान् वञ्चयन्ति, भाययन्ति च।

सम्पुटः–५ नवम्बर्–१९८८ सञ्चिका–८

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००

रसप्रश्नाः–

# अभिज्ञानदानम्

(रामेण दत्तम् अङ्गुलीयकं हनूमान् सीतायै दत्तवान्। तत् प्राप्य सीता अन्यत् अभिज्ञानं दत्त्वा काञ्चित् कथाम् अपि श्रावितवती। तं कथाभागम् आधारीकृत्य अधः केचन प्रश्नाः सज्जीकृताः सन्ति। युक्तम् उत्तरं जानन्तु।)

I. 'सीता रामाय अर्पणीया' इति रावणम् उद्दिश्य उक्तं विभीषणवचनं सीतां का श्रावितवती?
(अ) त्रिजटा नाम राक्षसी। (आ) विभीषणपुत्री अनला। (इ) विभीषणस्य पत्नी।

II. हनूमति नेतुं सिद्धे सत्यपि सीता गमनं निराकृतवती। तत्र प्रधानं कारणं किम्?
(अ) हनूमान् नेतुं न शक्नोति इति। (आ) राक्षसाः विघ्नम् उत्पादयेयुः इति। (इ) तथा कृतं चेत् रामस्य अपमाननं भवेत् इति।

III. अभिज्ञानार्थं रामः सूचनीयः इति सीता वायसघटनां श्रावितवती। सा घटना कुत्र प्रवृत्ता आसीत्?
(अ) दण्डकारण्ये। (आ) जनस्थाने। (इ) चित्रकूटे।

IV. सीतायां मोहितः कः वायसरूपेण आगतः आसीत्?
(अ) इन्द्रस्य पुत्रः जयन्तः। (आ) मन्मथः। (इ) देवेन्द्रः।

V. वायसम् उद्दिश्य रामः कम् अस्त्रं प्रयुक्तवान्?
(अ) ब्रह्मास्त्रम्। (आ) ब्रह्मास्त्रमन्त्रेण अभिमन्त्रितां दर्भाम्। (इ) पाशुपतास्त्रम्।

VI. आत्मानं नेतुं सीता रामाय कियतः कालस्य अवधिं सूचितवती?
(अ) एकमासात्मकम्। (आ) मासद्वयात्मकम्। (इ) सार्धैकमासात्मकम्।

VII. 'रामाय दातव्यः' इति उक्त्वा हनूमते किं दत्तवती सीता?
(अ) कान्तिमणिम्। (आ) शिखामणिम्। (इ) चूडामणिम्।

उत्तराणि–

I– (आ) II– (इ) III (इ) IV– (अ) V– (आ) VI– (अ) VII– (इ)

# रसवार्ताः

## अन्धाभ्यां पर्वतारोहणम्



पश्चिमहिमालयस्थं १६,००० द्वादशाङ्गुलोन्नतं पटाल्स् नामकं पर्वतं एषु दिनेषु पूनानगरीयौ उभौ युवकौ आरूढवन्तौ। तयोः नाम दत्तात्रेय योलु, मोहन् काम्ब्ले इति। एतौ अन्धौ युवकौ अन्येषां त्रयाणां युवकानां साहाय्येन पर्वतम् आरुह्य नूतनं विक्रमं स्थापितवन्तौ।

## राक्षसगोधिकानां नाशः कथम्?

६० दशलक्ष (मिलियन्) वर्षेभ्यः पूर्वं स्थिताः राक्षसगोधिकाः कथं वा अकस्मात् विलयं गताः? इत्यस्मिन् विषये विज्ञानवेत्तारः बहुधा संशोधनं कृत्वा नूतनं सिद्धान्तं स्थिरीकृतवन्तः सन्ति। 'अग्निपर्वतानां स्फोटतः सूर्यगोलम् आवृतम्, तेन भूगोले विविधानि परिवर्तनानि जातानि, तदा जातात् आम्लवर्षणात् हेतोः राक्षसगोधिकाः विलयं गताः' इति ते प्रतिपादयन्ति।





## अतिप्राचीना पाकशाला

पूरीजगन्नाथस्य देवालयस्य पाकशाला तावत् विशाला अस्ति यत् अत्र सहस्रजनेभ्यः अपि युगपत् एव पाकः कर्तुं शक्यः। गतेभ्यः सहस्रवर्षेभ्यः उपयुज्यमाना एषा पाकशाला प्रपञ्चे एव अतिप्राचीना इति अभिप्रायः अस्ति।

## परिभ्रमणवेगः

प्रपञ्चगोलके महता वेगेन परिभ्रमत् अन्यत् नक्षत्रम् एषु दिनेषु विज्ञानिनः अन्विष्टवन्तः सन्ति। १६ कि.मी. विस्तृतम् एतत् नक्षत्रं १०६ मिल्लीसेकेण्ड्समये एकं परिभ्रमणं समापयति। मिल्लीसेकेण्ड् नाम एकसेकेण्ड्कालस्य सहस्रतमः अंशः।



# शिरच्छेदः

कश्चन राजा कदाचित् केनचित् व्याधिना पीडितः अभवत्। वैद्यानां सर्वे प्रयत्नाः विफलाः। चिकित्सायां प्रचलन्त्याम् अपि रोगः दिने दिने वर्धते।

अन्ते राजा प्रकटितवान्– "यः मम रोगं निवारयितुं शक्नोति तस्मै अहम् अर्धं राज्यं दास्यामि। चिकित्साम् आरभ्य अष्टसु दिनेषु यः मम रोगं निवारयितुं न शक्नोति तस्य शिरच्छेदः भविष्यति" इति।

राज्यप्राप्त्याशया आगताः बहवः वैद्याः अष्टसु दिनेषु रोगं दूरीकर्तुम् अशक्ताः सन्तः प्राणैः वियुक्ताः जाताः।

'एवं सर्वेषां वैद्यानां नाशः भवति चेत् देशे चिकित्सायाः का गतिः?' इति आलोचितवान् कश्चित् ज्येष्ठः वैद्यः।

सः तद्दिने एव महाराजसमीपम् आगत्य उक्तवान्– "महाराज! भवतः चिकित्सार्थम् अहं सिद्धः। भवतः नियमः अपि अङ्गीकृतः मया। भवता अपि मम एकः नियमः अङ्गीकरणीयः" इति।

"कः सः नियमः?" इति पृष्ठवान् राजा।

"मया भवदीयं रोगं दूरीकर्तुं न शक्तं चेत् भवान् मम शिरच्छेदं कारयति खलु? अहं भवतः रोगं दूरीकर्तुं शक्तवान् चेत् स्वकीयं शिरः दातुं सिद्धः वा भवान्?" इति पृष्ठवान् सः वैद्यः।

"रोगः अपगतः चेत् मम शिरः किमर्थं दातव्यम्?" इति असमाधानेन पृष्टवान् राजा।

"रोगः न अपगतः चेत् मम शिरच्छेदः भवेत् खलु? अतः रोगः अपगतः चेत् भवतः शिरसः च्छेदः! उभयत्र अपि समानः तर्कः" इति उक्तवान् वैद्यः।

वैद्यस्य कथनस्य आन्तर्यं ज्ञातं महाराजेन। अतः सः शिरच्छेदनियमं परित्यक्तवान्।

एकवर्षं यावत् चिकित्सां कृत्वा महाराजस्य रोगम् अपसारितवान् वैद्यः।





# अस्थाने अदृष्टम्

एकदा मध्याह्नसमये भैरवो नाम युवकः अरण्ये मेषान् चारयन् आसीत्। तदा तदीयं प्रीतिपात्रं मेषः समूहात् पृथग्भूय कुत्रापि गतः इत्यंशः तेन ज्ञातः।

मेषस्य पदचिह्नानि अनुसरन् भैरवः काञ्चित् गुहां प्राप्तवान्। गृहायाः द्वारं महत्या शिलया आवृतम् आसीत्। तथापि पार्श्वे स्थितात् रन्ध्रतः कोऽपि पुरुषः अनायासेन अन्तः गन्तुम् अर्हति स्म।

गुहायाः पुरतः स्थितानि मेषस्य पदचिह्नानि दृष्टानि भैरवेण। 'प्रायः मम मेषः गुहायाः अन्तः गतवान् स्यात्' इति आलोच्य सः रन्ध्रद्वारा गुहां प्रविष्टवान्। किन्तु अन्तः यत् दृश्यं दृष्टं तेन सः कम्पमानः सञ्जातः। शरीरतः स्वेदधारा आगता।

गुहायाः मध्ये शिलायाः उपरि योगमुद्रायां स्थितं कस्यचित् योगिनः अस्थिपञ्जरं दृश्यते स्म। तस्य पार्श्वे कमण्डलु-दण्डादयः दृश्यन्ते स्म। 'कश्चित् श्रेष्ठः मुनीश्वरः तपः आचरन् एव मुक्तिं प्राप्तवान् स्यात्' इति आलोचितवान् भैरवः।

निरन्तरप्रयाणात् तत्समये तस्य महती पिपासा आसीत्। अतः सः पूर्वापरम् अनालोच्य कमण्डलुस्थं जलं झटिति पीतवान्। अनन्तरं यदा परितः दृष्टं तदा समीपे एव एकत्र स्थितः तदीयः मेषः तेन दृष्टः।

सः मेषस्य समीपं गत्वा तम् उन्नीय यथा आगतं यथैव गुहातः निर्गत्य मेषसमूहसमीपम् आगतवान्। एवम् आगमनसमये किञ्चन कण्टकं पादे लग्नम्। ततः महती वेदना उत्पन्ना। वेदनां सोढुम् अशक्तः सः "हा हन्त!" इति आक्रन्दनं कृतवान्।

भैरवः जन्मना मूकः। तादृशस्य मुखात्

"श्रीमाता"



इदानीं शब्दः निस्सरति! एतत्कारणतः आश्चर्यं सन्तोषं च प्राप्तवान् भैरवः कण्टकजातां वेदनां सर्वथा विस्मृतवान्।

यदा सः किञ्चिदग्रे गतवान् तदा लक्षितवान् यत् तदीयस्य प्रीतिपात्रस्य मेषस्य पुच्छं छिन्नम् अस्ति इति। खिन्नः सः– "मम मेषस्य पुच्छं यथा छिन्नं तथैव सर्वेषां मेषाणां पुच्छानि अपि छिन्नानि यदि भवेयुः तर्हि समीचीनं स्यात्" इति स्वगतम् उक्तवान्।

सायङ्कालसमये भैरवः ग्रामं प्रत्यागतवान्। मेषाः स्वस्वयजमानस्य गृहं गतवन्तः। अनन्तरदिने प्रातः सर्वैः ज्ञातं यत् ग्रामे कस्यापि मेषस्य पुच्छम् एव नास्ति इति। सर्वे एतस्मिन् विषये परस्परं चर्चाम् अपि आरब्धवन्तः। अत्रान्तरे भैरवः ज्ञातवान् यत् आत्मनः कथनसामर्थ्यम् अस्ति इति, आत्मना यत् उच्यते तत् सम्भविष्यति एव इति च।

मूकः भैरवः कथनशक्तिं प्राप्तवान् इति, सः यत् वदति तत् तथैव भवति इति च वार्ता क्षणमात्रेण ग्रामे प्रसृता। ग्रामीणाः सर्वे मेषपालाः भैरवस्य समीपम् आगत्य प्रार्थितवन्तः– "भोः! सर्वे मेषाः पुच्छं यथा प्राप्नुयुः तथा करोतु भोः। पुच्छं विना तेषां शोभा एव न भवति। पुच्छरहितस्य मेषस्य विक्रयणम् अपि क्लेशाय। अतः मेषाणां सर्वेषां पुच्छं प्रार्थयतु भोः" इति।

भैरवः स्ववचनप्रभावेण सर्वे मेषाः पुच्छवन्तः यथा भवेयुः तथा कृतवान्। तदनन्तरदिने सायङ्काले ग्रामप्रमुखस्य सेवकः आगत्य 'यजमानः आह्वयति' इति सूचितवान्।

गृहम् आगतं भैरवं ग्रामप्रमुखः उक्तवान्– "भोः भैरव! भवता मम एकम् इष्टं पूरणीयम्। प्रतिफलरूपेण भवान् यावत् इच्छति तावत् धनं दातुं सिद्धः अहम्। श्वः सूर्योदयतः पूर्वं भूस्वामी यथा मरणं प्राप्नुयात् तथा प्रार्थनां करोतु। तस्य मारणार्थं मया कृताः सर्वे प्रयत्नाः विफलाः। सः यदि मृतः भवेत् तर्हि निस्सन्तानस्य तस्य ऐश्वर्यं मदधीनं भविष्यति" इति।

"भूस्वामिनः मारणं वा! कीदृशं घोरम्

अकार्यम् एतत्!" इति उद्गारं प्रकटितवान् भैरवः। बलात् वा एतत्कार्यं साधयितुम् इच्छन् ग्रामाधिकारी तम् अन्धकारमये प्रकोष्ठे बन्धने स्थापितवान्। ततः बहिरागमनं क्षणमात्रस्य कार्यं चेदपि भैरवः तस्मिन् क्षणे तादृशं किमपि अस्मरन् रात्रिम् अन्धकारमये प्रकोष्ठे यापितवान्।

प्रातःकाले ग्रामाधिकारिणः सेवकाः तं बन्धविमुक्तं कुर्वन्तः प्रार्थितवन्तः– "भूस्वामिनः मारणार्थं भवन्तं यः बलात् सूचितवान् सः ग्रामाधिकारी अद्य उषःकाले अट्टात् पतितः सन् प्राणान् त्यक्तवान्। अस्माभिः तु भवतः अहितं किमपि न कृतं, न वा चिन्तितम् अपि। अतः कृपया अस्मान् न मारयतु भोः" इति।

'इतः परं ग्रामे स्थितिः अपायकारी एव' इति आलोच्य भैरवः मेषसमूहेन सह अरण्यमार्गम् अनुसृतवान्।

अरण्ये केचन भयङ्कराकाराः चोराः तस्य पुरतः आगत्य स्थितवन्तः। तेषां हस्ते स्थितानि तीक्ष्णानि आयुधानि दृष्ट्वा भीतः भैरवः तान् प्रार्थितवान्– "यदि भवन्तः इच्छन्ति तर्हि मम मेषान् सर्वान् भवद्भ्यः दास्यामि। मां कृपया न मारयन्तु। अहं सामान्यः मनुष्यः न" इति।

तस्य वचनं श्रुत्वा सर्वे चोराः उच्चैः अट्टहासं कृतवन्तः।

किन्तु अत्रान्तरे कश्चन तरक्षुः तत्र आगत्य मेषम् आकृष्य अधावत्।

एतत् दृष्ट्वा कुपितः भैरवः– "अये





तरक्षो! भवतः मरणकालः सन्निहितः इति जानातु" इति उच्चैः उक्तवान्।

अनन्तरक्षणे एव सः तरक्षुः अग्रे एकं पदम् अपि स्थापयितुम् अशक्तः सन् चतुष्पञ्चवार लुठन् प्राणान् अत्यजत्। मेषः सजीवं प्रत्यागच्छत्।

एतत् दृष्ट्वा चोरनायकः उष्णीषं निष्कास्य तेन भैरवस्य मुखं बद्ध्वा तं स्ववासस्थानं नीतवान्।

एतस्य चोरगणस्य ग्रहणार्थं राजभटाः बहुधा प्रयत्नं कुर्वन्तः आसन्। ते तद्दिने रात्रौ अकस्मात् आक्रमणं कृत्वा सर्वान् चोरान् बन्धने स्थापितवन्तः। भैरवं सामान्यं पथिकं मन्यमानाः राजभटाः तं बन्धविमुक्तं कृत्वा प्रेषितवन्तः।

बन्धविमुक्तः भैरवः स्वकीयान् मेषान् स्मृतवान्। "मदीयाः सर्वे मेषाः व्याघ्रशिशुरूपं प्राप्य मत्समीपं यदि आगच्छेयुः तर्हि समीचीनं स्यात्। तदा कस्माच्चित् अपि प्राणितः तेषां भीतिः न भविष्यति" इति स्वगतरूपेण उक्तवान् सः।

अनन्तरक्षणे एव सर्वे मेषाः व्याघ्रशिशुरूपं प्राप्य तस्य समीपे उपस्थिताः अभवन्। भैरवः तैः सह राजधानीं प्रति प्रस्थितवान्।

व्याघ्रशिशुभिः अनुस्रियमाणं मनुष्यं दृष्ट्वा भीताः जनाः इतस्ततः धावितवन्तः। किन्तु ते व्याघ्रशिशवः मेषाः इवः बें बें इति यदा ध्वनिं कुर्वन्ति तदा जनाः आश्चर्यम् अनुभूतवन्तः।

एषा वार्ता मन्त्रिणा श्रुता। सः भैरवं स्वसमीपम् आहूय पृष्टवान्– "कः भवान्? किम् एतत् विचित्रम्? व्याघ्रशिशवः कथं वा मेषाः इव ध्वनिं कुर्वन्ति?" इति।

तदा भैरवः– "अहं यः कोऽपि भवेयं नाम। तेन भवतः किम्? एतान् व्याघ्रशिशून् सिंहान् करोमि, पश्यतु" इति साभिमानम् उक्त्वा तान् सिंहान् कृतवान्।

एषः कश्चन महिमशाली इति ज्ञातवान् मन्त्री। सः भैरवं महाराजसमीपं नीत्वा 'एतं भवतः मार्गदर्शकत्वेन यदि योजयेत् तर्हि वरं स्यात्' इति महाराजं सूचितवान्। मन्त्रिणः वचनं वेदवाक्यं मन्यमानः राजा भैरवं

मार्गदर्शकस्थाने नियोजितवान्।

अनन्तरम् एकान्ते मन्त्री महाराजं निवेदितवान्– "प्रभो! एषः भैरवः द्रष्टुं सामान्यः चेदपि असामान्यमहिमशाली। स्वशक्तेः उपयोगार्थम् अपेक्षिता बुद्धिः तस्य नास्ति, तावदेव। एतादृशः कथमपि यदि शत्रुवशं गच्छेत् तर्हि अस्माकं महती हानिः। अनुनयपूर्वकम् उक्तं चेत् एतद्द्वारा यत्किमपि कारयितुं शक्यते" इति।

भैरवस्य वासार्थम् एकं विशालं भवनं सज्जीकृतम्। तत्र विशेषभोजनव्यवस्था, विनोदव्यवस्था इत्यादयः उपकल्पिताः। अनन्तरं असाध्यानि बहूनि कार्याणि भैरवद्वारा साधितवान् महाराजः। भैरवस्य साहाय्यात् हेतोः महाराजस्य शत्रुभयम् एव अपगतम् अभवत्।

एकदा भैरवस्य वसतिभूतस्य भवनस्य रक्षकभटः जल्पनसमये भैरवं पृष्टवान्– "पूर्वतनजीवनस्य इदानीन्तनजीवनस्य च कोऽपि भेदः भवता लक्षितः वा?" इति।

"तत् किमिति वदामि? पूर्वं मेषान् चारयन् सन्तोषेण जीवन् आसम्। इदानीं सकलसौभाग्यानि सन्ति चेदपि तादृशी तृप्तिः नास्ति जीवने। अतः अरण्ये यथापूर्वं सञ्चारः करणीयः इति इच्छा तदा तदा भवति। किन्तु तथा गन्तुं महाराजस्य अनुमतिः नास्ति" इति खेदेन उक्तवान् भैरवः।

तदा भटः हसन् उक्तवान्– "भवान् तु सर्वथा मुग्धः। आत्मनः सामर्थ्यम् एव न जानाति। प्रसङ्गवशात् स्मृतं वदामि। भवान्



राजकुमारीम् इतः पूर्वं दृष्टवान् स्यात् खलु? सा परिणेतव्या इति इच्छा भवतः मनसि न उत्पन्ना एव वा? सत्यं वदतु" इति।

तदा भैरवः भीतिं प्रदर्शयन् उक्तवान्– "कमललोचनां जगदेकसुन्दरीं राजकुमारीं परिणेतुं को वा न इच्छेत्? किन्तु एषा इच्छा कस्यचित् मादृशस्य मुखात् यदि निर्गच्छेत् तर्हि महाराजः तं शूलम् आरोपयेत्" इति।

तदा सः रक्षकभटः भैरवं प्रोत्साहयन् उक्तवान्– "भवतः मुखात् यत् निर्गच्छति तत् सिध्यति एव। एतं विषयं महाराजः अपि जानाति। भवान् एव एतत् न जानाति। अतः श्वः महाराजं दृष्ट्वा 'राजकुमारीम् अहं परिणेतुम् इच्छामि' इति इच्छां प्रकटयतु। यदि सः न अङ्गीकुर्यात् तर्हि शक्तिं प्रदर्शयतु" इति।

भैरवस्य मनसि द्वैधीभावः आरब्धः। तस्यां रात्रौ सः स्वप्ने राजकुमारीं आत्मना परिणीतां भावितवान्।

अनन्तरदिने सः राजसमीपं गत्वा आत्मनः इच्छां प्रकटीकृतवान्।

एतत् श्रुत्वा राजा क्षणकालं स्तब्धः। अनन्तरं झटिति मनसः समत्वं प्राप्य भैरवम् उक्तवान्– "शक्तिशाली भवान् मम जामाता भवेत् इति तु महतः सन्तोषस्य विषयः। इदानीं भोजनसमयः खलु? अतः आगच्छतु, मया सह भोजनं करोतु" इति।

भैरवः राज्ञः पार्श्वे उपविश्य प्रथमं कवलं मुखे स्थापितवान्। तदा उदरे वेदनां प्राप्य सः अधः पतितवान्। 'राज्ञा विषप्रयोगः कारितः' इति ज्ञातवान् भैरवः। मरणभीतिः अपि उत्पन्ना तस्य मनसि।

सः भूमौ लुण्ठनं कुर्वन्– "हा हन्त! कीदृशी दुर्गतिः! एतादृशस्य जीवनस्य अपेक्षया पूर्वं यथा कृतं तथा मेषचारणजीवनम् एव उत्तमम् अभविष्यत्" इति स्वगतम् उक्तवान्।

तस्य इच्छा पूर्णा अभवत्। सः यथापूर्वं मूकत्वं प्राप्य मेषान् चारयन् अरण्ये सञ्चरन् स्थितवान्।





# उदारः श्यामशास्त्री

सूरणपुरे कनकराजः नाम कृषिकः आसीत्। तस्य एका एव पुत्री। तस्याः नाम कनकलता इति। रत्नराजः नाम कृषिकः गगनपुरे निवसति स्म। तस्य चन्द्रकान्तः नाम एकः एव पुत्रः आसीत्।

कनकराजः रत्नराजस्य पुत्रस्य विषये श्रुतवान्। एषः मम पुत्र्याः वरः भवितुम् अर्हति इति आलोचितवान् कनकराजः।

किन्तु रत्नराजः वरदक्षिणारूपेण विंशतिसहस्रं रूप्यकाणि पृष्टवान्। तदा कनकराजः अपि– 'एवं तर्हि मम पुत्र्यै विंशतितुलामितानि सुवर्णाभरणानि दातव्यानि' इति नियमं सूचितवान्। रत्नराजः सूचितवान् यत् एतत् तु मम सामर्थ्यबाह्यम् इति। तदा कनकराजः अपि वरदक्षिणां दातुं निराकृतवान्। एवं सम्बन्धवार्तालापः छिन्नः। कनकराजः निराशया ग्रामं प्रत्यागतवान्।

पार्श्वस्थे ग्रामे श्यामशास्त्री निवसति। सः उदारः, समस्यापरिहारे सिद्धहस्तः च। तं श्यामशास्त्रिणम् उभौ अपि सम्यक् जानीतः। तौ पृथक् पृथक् गत्वा तं स्वसमस्यां निवेदितवन्तौ।

एकदा श्यामशास्त्री कनकराजस्य गृहम् आगत्य उक्तवान्– "कनकराज! मम वचने विश्वस्य भवान् रत्नराजस्य अपेक्षानुगुणं वरदक्षिणां ददातु भोः" इति।

"श्रीमन्! किं वदति भवान्? विंशतिसहस्रं रूप्यकाणि कुतः आनयेयम्? एतद्विषये मम असामर्थ्यम् इतः पूर्वम् एव भवते निवेदितवान् आसम्" इति उक्तवान् कनकराजः।

"भवतः स्थितिम् अहं जानामि एव। कुतश्चित् ऋणम् आनीय तस्मै धनं ददातु" इति सूचितवान् श्यामशास्त्री।

"विवेकः"

"किन्तु ऋणप्रत्यर्पणं कथं भवेत्? तत्रापि विंशतिसहस्रं रूप्यकाणि!" इति उद्गारं प्रकटितवान् कनकराजः।

"तत्र न तथा कष्टम्। रत्नराजः भवतः पुत्र्यैः विंशतितुलामितानि सुवर्णाभरणानि ददाति खलु? विवाहानन्तरं तानि विक्रीय ऋणं प्रत्यर्पयतु। विवाहः तु निर्विघ्नं प्रचलतु नाम" इति उपायं सूचितवान् श्यामशास्त्री।

एतां सूचनां कनकराजः अङ्गीकृतवान्। तदनन्तरं श्यामशास्त्री रत्नराजस्य गृहं गत्वा उक्तवान्– "भोः! कनकराजेन पुत्र्याः कृते यानि आभरणानि प्रार्थितानि तानि दातुम् अङ्गीकरोतु" इति।

रत्नराजः आश्चर्येण पृष्टवान्– "श्रीमन्! भवान् सम्यक् जानाति एव यत् विंशतितुलापरिमितानि आभरणानि कारयितुं मम सामर्थ्यं नास्ति इति। तथापि एवं मां सूचयति खलु?" इति।

"भवतः परिस्थितिं ज्ञात्वा एव खलु वदामि? ऋणं कुतश्चित् आनीय आभरणानि कारयतु" इति सूचितवान् श्यामशास्त्री।

"ऋणं कदाचित् वा प्रत्यर्पणीयम् एव। तत् कथम्?" इति सन्देहं प्रकटितवान् रत्नराजः।

"तत् तु सुलभम् एव। कनकराजः वरदक्षिणारूपेण यत् धनं ददाति तत् दत्त्वा ऋणं प्रत्यर्पयतु। परिहृता खलु समस्या?" इति उक्तवान् श्यामशास्त्री।

एतदनन्तरं कनकमाला-चन्द्रकान्तयोः विवाहः निर्विघ्नं प्रवृत्तः। अनन्तरम् एकदा श्यामशास्त्री कनकराज-रत्नराजयोः पुरतः आत्मना कृतम् उपायं विस्तरेण उक्तवान्। तदा जामातृविषये स्नुषाविषये च आत्मना यादृशः व्यवहारः प्रदर्शितः तद्विषये लज्जाम् अनुभूतवन्तौ कनकराजः रत्नराजः च।

रत्नराजः कनकराजतः वरदक्षिणारूपेण स्वीकृतं धनं प्रत्यर्पितवान्। 'नववधूः आभरणैः वञ्चिता न भवेत्' इति श्यामशास्त्रिणः विचारः। अतः आभरणानां निमित्तं यावान् व्ययः जातः तावत् धनं स्वयं दत्तवान् श्यामशास्त्री।






## ११

[अपूर्वं जलपातम् अतिक्रम्य गतः विनोदः मुनेः साहाय्येन सर्वान् विघ्नान् अतिक्रम्य स्वप्नभूमिं प्राप्तवान्। विनोदं खातं तारयित्वा मुनिः अदृश्यतां गतवान्। तृप्तिभूमौ विनोदः युवराज्ञीं दृष्टवान्। सा विनोदं सूचितवती यत् नीलपर्वते स्थितं नक्षत्रफलं खादितं चेत् देवतायाः दर्शनं भविष्यति इति। तदनन्तरम् ......]

कुत्रापि प्रस्थितः सुन्दरः हरिणः युवराज्ञ्याः आह्वानं श्रुत्वा तस्याः समीपम् आगच्छत्।

तं हरिणम् उक्तवती युवराज्ञी– "अये हरिणमित्र! एकं साहाय्यम् आवश्यकं खलु? प्रतिवर्षम् इव अस्मिन् अपि वर्षे तत् नक्षत्रफलं फलितं वा इति नीलपर्वतं गत्वा दृष्ट्वा आगन्तुम् अर्हति वा?" इति।

हरिणः एतत् अङ्गीकृत्य समीपस्थम् एकं लघुपर्वतकम् आरुह्य अग्रिमौ पादौ उन्नीय अपश्यत्। किन्तु तेन तत् नीलपर्वतस्थं सस्यं न दृष्टम्।

हरिणः दूरे स्थितं शशम् आह्वयत्। शशः हरिणस्य शिरसि उपविश्य अग्रिमौ पादौ उन्नीय सस्यं द्रष्टुं प्रयत्नम् अकरोत्। किन्तु तेनापि न शक्तम्।

अत्रान्तरे तत्र एकः चिक्रोडः आगच्छत्।

"मनोजदासः"



मः हरिणमुखात् वस्तुस्थितिं श्रुत्वा शशस्य शिरः आरुह्य कीच् कीच् इति शब्दं कुर्वन् उत्साहेन अपश्यत्। तेनापि किमपि प्रयोजनं न सिद्धम्।

समीपे वृक्षस्य शाखायां कश्चन पक्षी उपविष्टः आसीत्। चिक्रोडः तं पक्षिणम् आहूय असूचयत्– "पक्षिमित्र! नीलपर्वतस्थं विचित्रसस्यं फलितं वा इति पश्यतु कृपया" इति।

सः पक्षी उपरि उड्डीय ततोऽप्युपरि उड्डयमानं गृध्रं दृष्ट्वा– "अये गृध्रराज! विचित्रवृक्षे फलं दृश्यते वा इति पश्यतु" इति अवदत्।

गृध्रः साक्षात् नीलपर्वतस्थस्य विचित्रवृक्षस्य समीपं गत्वा सर्वं दृष्ट्वा प्रत्यागत्य पक्षिणम् अवदत्– "अये पक्षिमित्र! नीलपर्वते स्थितेन वृक्षेण फलितम्। नक्षत्रम् इव कान्त्या प्रकाशमानं तत् फलम् एकदिनाभ्यन्तरे पक्वं भवेत्" इति।

एतत् श्रुत्वा युवराज्ञी विनोदम् उक्तवती– "एषः तु अपूर्वः दैवयोगः। अद्य अत्रैव तिष्ठतु। श्वः नक्षत्रफलं खादित्वा प्रयाणम् अनुवर्तयतु" इति।

विनोदः एतं प्रस्तावम् अङ्गीकृत्य तद्दिने तत्रैव स्थितवान्।

विनोदेन तृप्तिभूमौ बहूनि वैचित्र्याणि दृष्टानि। तस्यां भूमौ अतृप्तेः नाम एव कुत्रापि न श्रूयते स्म। युवराज्ञ्याः वचनं तु तावत् मधुरं शान्तियुतं च आसीत् यत् तस्याः वचनस्य श्रोता अमृतपानसुखम् अनुभवति स्म।

तृप्तिभूमिवासिनाम् अन्यत् अपि सामर्थ्यम् आसीत्। चन्द्रकान्तिः नीलवर्णेन भवेत्, उत सुवर्णवर्णेन विराजेत, अथवा रजतम् इव थालथल्ययुतं स्यात् इति निर्णीय ते अपेक्षानुगुणं तां परिवर्तयितुं शक्नुवन्ति स्म।

तत्रत्याः जनाः परमसुन्दरीं कल्पनां काञ्चित् प्राप्य तदनुगुणं सृष्टिं कर्तुम् अर्हन्ति। अपेक्षितं वर्णं योजयितुम् अपि अर्हन्ति। किन्तु एवं तैः निर्मितं शाश्वतं न तिष्ठति। अल्पे एव काले पूर्णतया लुप्तं भवति

तत्।

एवं ते अपूर्वान् स्वप्नान् पश्यन्तः स्वप्नान् रेखादिभिः चित्रयन्तः अपूर्वाभिः शक्तिभिः तेषु चित्रेषु जीवं पूरयन्तः अपरिमितम् आनन्दम् अनुभवन्ति।

किन्तु ते अनूह्यान् विषयान् स्रष्टुं न अर्हन्ति। अतः तेषां विपत्तिः एव नास्ति! अज्ञाते क्षेत्रे प्रवेशः कृतः चेदेव खलु अपायस्य प्रसक्तिः? अज्ञातस्य कल्पनां कर्तुं ते न इच्छन्ति। तेषाम् एतादृशीं प्रवृत्तिं दृष्ट्वा विनोदः आश्चर्यम् अनुभवति।



अनन्तरदिने सूर्योदयः जातः। युवराज्ञी विनोदं नीलपर्वतस्य दिशि नीतवती।

मार्गे गमनसमये विनोदः ताम् उक्तवान्— "सन्तृप्तजीविभिः शान्तस्वभावैः भवद्भिः साधयितुम् अशक्यानि बहूनि सन्ति। मानवमात्रेण साधयितुम् शक्यानि एव असङ्ख्यानि सन्ति। दुःसाध्यम् अपि वयं साधयिष्यामः। किन्तु मानवानाम् अस्माकं दुरदृष्टं नाम कुत्र शक्तिः विनियोक्तव्या इत्यत्र एव वयं मोहं प्राप्नुमः। दुष्कृत्येषु एव अस्माकं शक्तेः स्वातन्त्र्यस्य च विनियोगः भवति। एतत् एव अस्माकं दौर्बल्यम्। न जाने एतत् कस्य शापः इति" इति।

"शापम् अपि वररूपेण परिवर्तयितुं शक्नुवन्ति खलु भवन्तः? तर्हि किमर्थं चिन्ता? सत्फलप्राप्तौ कः अवरोधः?" इति पृष्टवती युवराज्ञी।

"सामर्थ्यम् अस्ति मानवानाम् अस्माकम् इति अहम् अङ्गीकरोमि। किन्तु सत्फलं प्राप्तव्यम् इति कोऽपि न चिन्तयति एव। विना श्रमेण जीवनम् इच्छन्ति ते। मुनिना यथा उक्तं, बहवः अज्ञाने एव आनन्दं पश्यन्ति। सर्वं जानन्तः, शक्तिमन्तः अपि ते अजानन्तः इव सामर्थ्यहीनाः इव च व्यवहरन्ति" इति उक्तवान् विनोदः।

एतावता तत्र सर्वत्र सूर्यकिरणाः व्याप्ताः आसन्। स च प्रदेशः प्रशान्तः गम्भीरः च आसीत्।

नीलपर्वतस्य उपरि अपूर्वसस्ये एकम् एव फलं दृश्यते स्म। नक्षत्रम् इव प्रकाशते स्म तत्।



युवराज्ञी तत् फलम् उत्पाट्य विनोदाय दत्त्वा– "भवता गन्तव्यः प्रदेशः नीलपर्वतस्य अपरस्मिन् पार्श्वे अस्ति। नीलपर्वतस्य अतिक्रमणेन तस्य प्रदेशस्य सीमां प्राप्स्यति भवान्।

तत्र सर्वदा गाढः अन्धकारः भवति। सर्वदा झञ्झावातः अपि भवति एव। मेघगर्जनं तडित्स्फुरणम् इत्यादयः तत्र ताण्डवनृत्यं कुर्वन्तः भवन्ति।

भवान् एतत् नक्षत्रफलं प्रथमं खादतु। अनन्तरं भवतः कुतश्चित् अपि भीतिः न भवति। किन्तु तत्र काश्चन अमानुषशक्तयः भवन्ति। भवति लेशमात्रं भयं दृष्टं चेदपि ते भवतः कार्ये विघ्नम् उत्पादयिष्यन्ति। सधैर्यं गतं चेत् ते भवत्समीपम् अपि न आगमिष्यन्ति। विजयं प्राप्य प्रत्यागच्छतु भवान्" इति उक्त्वा विनोदं प्रेषितवती।

विनोदः तत् फलं खादित्वा अग्रे गतवान्। किञ्चिद्दूरं गमनानन्तरं सः पर्वतयोः मध्ये एकं खातं दृष्टवान्। स च खातः मेघैः आच्छन्नः आसीत्।

एवं गच्छन् विनोदः दृष्टिं परिवर्त्य दृष्टवान्। किन्तु तत्र कुत्रापि युवराज्ञी तेन न दृष्टा।

परितः धूमः इव हिमं व्याप्तम् आसीत् इत्यतः दृष्टिः सुदूरं न प्रसरति। अग्रे हिमस्य सान्द्रता इतोऽपि तीव्रा जाता। मार्गः अपि इदानीं न दृश्यते। तथापि युवराज्ञ्या मार्गं सुस्पष्टं सूचितम् आसीत् इत्यतः विनोदस्य काऽपि भीतिः नास्ति। सः सधैर्यम् अग्रे गतवान्।

इतोऽपि अग्रे यदा गतं तदा हिमपातः सम्मुखम् आगतः। वायुसहितस्य हिमपातस्य कारणतः पदे पदे पतनभीतिः भवति। तथापि सः न धैर्यच्युतः। तीक्ष्णाः तडितः, कठोरः अशनिः च पुनः पुनः दृश्यते। अशनिपातः शिलाः विदारयति इव।

जम्बूफलाकारकाः जलबिन्दवः आकाशात् निरन्तरं पतन्ति। अकस्मात् उभयपार्श्वे स्थितासु शिलासु रन्ध्राणि जातानि। ततः वेगेन जलम् उद्गतम्।

बहुषु स्थलेषु एवं जलम् उद्गच्छति

तत्।

एवं ते अपूर्वान् स्वप्नान् पश्यन्तः स्वप्नान् रेखादिभिः चित्रयन्तः अपूर्वाभिः शक्तिभिः तेषु चित्रेषु जीवं पूरयन्तः अपरिमितम् आनन्दम् अनुभवन्ति।

किन्तु ते अनूह्यान् विषयान् स्प्रष्टुं न अर्हन्ति। अतः तेषां विपत्तिः एव नास्ति! अज्ञाते क्षेत्रे प्रवेशः कृतः चेदेव खलु अपायस्य प्रसक्तिः? अज्ञातस्य कल्पनां कर्तुं ते न इच्छन्ति। तेषाम् एतादृशीं प्रवृत्तिं दृष्ट्वा विनोदः आश्चर्यम् अनुभवति।

अनन्तरदिने सूर्योदयः जातः। युवराज्ञी विनोदं नीलपर्वतस्य दिशि नीतवती।

मार्गे गमनसमये विनोदः ताम् उक्तवान्– "सन्तृप्तजीविभिः शान्तस्वभावैः भवद्भिः साधयितुम् अशक्यानि बहूनि सन्ति। मानवमात्रेण साधयितुम् शक्यानि एव असङ्ख्यानि सन्ति। दुःसाध्यम् अपि वयं साधयिष्यामः। किन्तु मानवानाम् अस्माकं दुरदृष्टं नाम कुत्र शक्तिः विनियोक्तव्या इत्यत्र एव वयं मोहं प्राप्नुमः। दुष्कृत्येषु एव अस्माकं शक्तेः स्वातन्त्र्यस्य च विनियोगः भवति। एतत् एव अस्माकं दौर्बल्यम्। न जाने एतत् कस्य शापः इति" इति।

"शापम् अपि वररूपेण परिवर्तयितुं शक्नुवन्ति खलु भवन्तः? तर्हि किमर्थं चिन्ता? सत्फलप्राप्तौ कः अवरोधः?" इति पृष्टवती युवराज्ञी।



"सामर्थ्यम् अस्ति मानवानाम् अस्माकम् इति अहम् अङ्गीकरोमि। किन्तु सत्फलं प्राप्तव्यम् इति कोऽपि न चिन्तयति एव। विना श्रमेण जीवनम् इच्छन्ति ते। मुनिना यथा उक्तं, बहवः अज्ञाने एव आनन्दं पश्यन्ति। सर्वं जानन्तः, शक्तिमन्तः अपि ते अजानन्तः इव सामर्थ्यहीनाः इव च व्यवहरन्ति" इति उक्तवान् विनोदः।

एतावता तत्र सर्वत्र सूर्यकिरणाः व्याप्ताः आसन्। स च प्रदेशः प्रशान्तः गम्भीरः च आसीत्।

नीलपर्वतस्य उपरि अपूर्वसस्ये एकम् एव फलं दृश्यते स्म। नक्षत्रम् इव प्रकाशते स्म तत्।



वा औष्ण्यं स्यात् इति आलोच्य विनोदः कोटर प्रविष्टवान्।

किन्तु कोटरे तलम् एव न आसीत्। आधाराभावात् विनोदः अधोधः गतवान्। एवं कियत् अधः गतम् इति न ज्ञानं तेन। अन्ते काचित् भूमिः प्राप्ता। तदुपरि पतितः सः परितः दृष्टिं प्रसारितवान्। सुन्दरे उद्याने तेन स्थितम् आसीत्। उद्यानस्य मध्ये कश्चन देवालयः दृश्यते स्म।

विनोदस्य तु परमाश्चर्यम् – क्व तटाकः? क्व वृक्षः? वृक्षस्य कोटरे एतावान् सुन्दरः प्रदेशः क्व ? तत्रापि रमणीयम् उद्यानं भवितुं कथम् अर्हति?

"अत्र तादृशम् आश्चर्यकरं किम् अस्ति?" इति कश्चन कण्ठस्वरः श्रुतः। विनोदः तस्यां दिशि दृष्टिं प्रसारितवान्।

शान्तमुखः हसन्मुखी च कश्चन वृद्धः तस्य पुरतः आगत्य स्थितवान्। 'एषः एतस्य देवालयस्य अर्चकः स्यात्' इति आलोचितवान् विनोदः।

"श्रीमन्! मम मनसि उत्पन्नान् सन्देहान् भवान् कथं ज्ञातुं शक्तवान्? वृक्षस्य कोटरः किं लघुः न भवति? कोटरे एतावत् विशालम् उद्यानं कथं वा भवेत्? एतत्सर्वं किम् आश्चर्यकरं न वा?" इति पृष्टवान् विनोदः वृद्धं नमस्कृत्य।

"स्थलं नाम आकाशः। स च निरवधिकः। तत्र अल्पत्वं महत्त्वं वा न भवति। स्थलं केन वा मानेन भवन्तः मान्ति?" इति पृष्टवान् सः वृद्धः।

"अङ्गुल-द्वादशाङ्गुलादिभिः स्थलस्य मानं कुर्मः वयम्" इति उत्तरं दत्तवान् विनोदः।

"एवं मानं तु मापनदण्डस्य, न तु स्थलस्य इति अंशं स्मरतु। स्थलम् अभिन्नम् अखण्डं निरवधिकं च। लघुना मानेन तस्य मापनं सर्वथा अशक्यम्। किञ्चिच्चिन्तनेन भवान् एतत् तत्त्वं ज्ञातुम् अर्हति" इति उक्तवान् वृद्धः।

"तदस्तु तावत्, मम मनसि उत्पन्नाः विचाराः भवता कथं ज्ञाताः इत्यस्य संशयस्य उत्तरं न उक्तं भवता" इति उक्तवान्

विनोदः।

"आलोचनायां मम भवतः इति भेदः नास्ति अत्र। अस्मिन् दिव्यप्रदेशे पुरतः स्थितस्य सर्वस्यापि मनोभावः दर्पणे इव सुस्पष्टं ज्ञातुं शक्यते। भवान् अपि प्रयत्नं करोतु। स्वयं सर्वं ज्ञातं भवति" इति उक्तवान् सः वृद्धः।

वृद्धस्य मनसि किम् अस्ति इति ज्ञातुम् इच्छन् विनोदः तदेकदृष्ट्या वृद्धं दृष्टवान्। तत्क्षणे एव तेन वृद्धस्य मनसि स्थिताः विचाराः सुस्पष्टं ज्ञाताः।

"आलये स्थितायाः देव्याः दर्शनार्थम् अहम् आगतवान् इति जानाति भवान्। भवान् मां तत्र नेतुम् इच्छति। वरत्रयम् एव प्रार्थनीयम् इति सूचयितुम् अपि इच्छति भवान्। एतदेव खलु अस्ति भवतः मनसि?" इति उक्तवान् विनोदः।

"भवदुक्तं सत्यम् एव। किन्तु मया उच्यमानं भवतः सन्तोषाय न भवेत् खलु? यतः भवान् वरचतुष्टयं प्रार्थयितुम् इच्छति" इति उक्तवान् वृद्धः।

"आम्। भवता सत्यम् एव उक्तम्" इति उक्तवान् विनोदः।

"भवतः आशयः सफलः न भविष्यति। यतः प्रार्थनायाः अपि परिमितिः अस्ति अत्र। परिमितिः सृष्टेः नियमः। केनापि विशेषकारणेन तादृशी परिमितिः निश्चिता भवति। हिताय एव सर्वं भवति अत्र। परिशीलयतु, सिंहः यदा भवन्तम् उन्नीतवान् तदा भवतः मनसि भयं जातम्। किन्तु यदि सिंहेन तथा कृतं न स्यात् तर्हि अग्निभित्तेः अतिक्रमणं भवता किं शक्यम् आसीत्? कोटरस्य तलं नास्ति इति भवान् चकितः। किन्तु तेनैव कारणेन खलु भवान् अत्र आगन्तुं शक्तवान्। अतः अत्र यत् प्रवर्तते तत् हिताय एव इति अंशं कदापि मा विस्मरतु" इति उक्तवान् वृद्धः।

तस्य वचनं श्रुत्वा अङ्गीकारपूर्वकं शिरः चालितवान् विनोदः।

—(अनुवर्तते)






# किरीटप्राप्तिफलम्

'मध्यरात्रे त्रिविक्रमः आगमिष्यति, तदा का वा नूतना कथा वक्तव्या?' इति यावत् वेतालः आलोचयन् आसीत् तावता त्रिविक्रमः तत्र आगतवान्। सः वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! अस्मिन् अर्धरात्रे श्मशानमार्गे महता छलेन भवान् यत् साधयितुम् इच्छति तस्य सत्फलम् एव लभ्येत इति भ्रमः मास्तु भवतः। कार्यसिद्धौ मानवातीतायाः शक्तेः अपि महत्त्वपूर्णं पात्रं भवति। अतः कार्यस्य फलम् उत्तमम् अपि भवेत्, अधमाधमम् अपि भवितुम् अर्हति। पूर्वं देवदत्तनामकः प्रयत्नं कृत्वा अपि अनिष्टं फलं यत् प्राप्तवान् तदेव अत्र उदाहरणम्। तां कथां विस्तरेण श्रावयामि तावत्। कथाश्रवणेन भवतः

## वेतालकथा



मार्गायासः परिहृतः भवतु नाम" इति।

अनन्तरं बेतालेन कथा आरब्धा—

पूर्वं हंसगिरिराज्ये नन्दगुप्तः नाम कश्चन वृद्धः आसीत्। तस्य एकः एव पुत्रः। पुत्रस्य नाम देवदत्तः इति। नन्दगुप्तस्य समीपे एकम् अपूर्वं किरीटम् आसीत्। किरीटे मणिमाणिक्यादीनि तत्र तत्र योजितानि आसन्। अतः किरीटं कान्त्या विराजते स्म।

देवदत्तः जन्मना एव बुद्धिमान्। विद्याभ्यासं सम्यक् कृतवान् आसीत् सः। कमपि वाणिज्यमार्गम् आश्रित्य धनसम्पादनं करणीयम् इति तस्य अभिलाषः। किन्तु दारिद्र्यकारणतः तस्य स्वप्नाः साकारतां न प्राप्नुवन्ति। मूलधननिक्षेपणं विना वाणिज्यं कर्तुं न शक्यते खलु?

एकदा देवदत्तः पितुः समीपं गत्वा— "तात! भवतः उद्देशः कः इति अद्यावधि मया न ज्ञातम्। अस्माकं समीपे तु अत्यमूल्यैः रत्नैः युतम् अपूर्वं किरीटम् अस्ति। तथापि वयम् उपवासम् आचरन्तः स्म। किम् एतत् जीवनम्? मम भाविजीवनस्य विषये भवता कदापि चिन्तितं वा?" इति पृष्टवान्।

तदा नन्दगुप्तः उक्तवान्— "वत्स! तत् किरीटं न सामान्यम्, येन वयं तत् विक्रीय उदरं पूरयेम। तस्य किरीटस्य वैशिष्ट्यम् अस्ति। यः राजोचितं वेषं धृत्वा एतत् किरीटं शिरसि धृत्वा महाराजसमीपं गच्छति तस्मै महाराजः युवराज्ञीं दास्यति। किरीटप्रभावः अत्र कारणम्। मया तु राज्ञः जामातृत्वं प्राप्तुं न शक्तम्। धनसम्पादनचिन्तायाम् एव दिनानि गतानि। मम जीवनं तु समाप्तप्रायम्। भवान् वा राजजामाता भवतु इति उद्देशेन तच्च किरीटं मया सुरक्षितं स्थापितम्" इति।

इदानीं देवदत्तस्य मनसि विचारकोलाहलः। 'राजोचितवेषप्राप्त्यर्थं प्रभूतं धनम् आवश्यकम्। सामान्यपरिश्रमेण तत् प्राप्तुं न शक्यते। किरीटं कुत्रापि न्यासरूपेण स्थापयित्वा प्राप्तेन धनेन महत् वाणिज्यं करणीयम्। ततः यः लाभः प्राप्यते तेन किरीटं प्रतिप्राप्तव्यम्। एवं धनं सम्पाद्य किरीटं धृत्वा राजोचितं वेषं च धृत्वा युवराज्ञी परिणेतव्या। किन्तु किरीटं न्यासरूपेण

स्थापयितुं पिता प्रायः न अङ्गीकुर्यात्। एतदर्थं कोऽपि उपायः आश्रयणीयः' इति आलोचितवान् देवदत्तः।



केषाञ्चित् दिनानाम् अनन्तरं वृद्धः नन्दगुप्तः दिवङ्गतः। इदानीं किरीटस्य यजमानः देवदत्तः एव। सः किरीटं कस्यचित् धनिकस्य अधीने न्यासरूपेण स्थापयित्वा दशसहस्रं रजतनाणकानि प्राप्तवान्। तेन धनेन समुद्रवाणिज्यम् आरब्धवान् च।

समुद्रवाणिज्ये तेषु दिनेषु मेघनादः प्रसिद्धः आसीत्। प्रतिस्पर्धिनः तस्य न आसन्। इदानीं देवदत्तस्य प्रवेशेन स्पर्धा आरब्धा। देवदत्तस्य वाणिज्यं तु दिने दिने प्रवर्धते। एतां स्पर्धां सोढुम् अशक्तः मेघनादः समुद्रवाणिज्यं परित्यज्य रत्नवाणिज्यम् आरब्धवान्।

केषुचित् एव मासेषु देवदत्तः विंशतिसहस्रं रजतनाणकानि सम्पाद्य धनिकसमीपं गत्वा– "एतानि दशसहस्रं रजतनाणकानि स्वीकरोतु। न्यासरूपेण स्थापितं मम किरीटं प्रत्यर्पयतु" इति सूचितवान्।

तदा सः धनिकः हसन्– "भोः, मया यत् धनं दत्तं तस्य वृद्धिः कियत् भवेत् इति गणितं वा भवता? मम लाभांशः अपि अत्र भवेत् खलु? अतः विंशतिसहस्रं रूप्यकाणि दत्त्वा किरीटं प्रतिनयतु" इति सूचितवान्।

एतत् श्रुत्वा प्रतिगतः देवदत्तः अत्यधिकं लाभं प्राप्तुम् इच्छन् रत्नवाणिज्यम् आरब्धवान्। रत्नवाणिज्यक्षेत्रम् अपि आगतवन्तं देवदत्तं दृष्ट्वा मेघनादः कोपं प्राप्नोति। किन्तु प्रतीकारं किमपि साधयितुं न शक्नोति सः।

देवदत्तः त्रिशंतुसहस्रं रजतनाणकानि सम्पाद्य पुनरपि धनिकस्य समीपं गतवान्। किरीटं प्रत्यर्पयंतु इति पृष्टवान् च।

तदा धनिकः उक्तवान्– "भवान् एतावत्पर्यन्तं न आगतः। अवधिः तु समाप्तः आसीत्। इतः परं भवान् न आगच्छेत् इति भावयन् अहं तत् किरीटं त्रिंशत्सहस्ररजतनाणकमूल्येन मेघनादाय दत्तवान्। इतः परं किमपि कर्तुं न शक्यते" इति।



देवदत्तः ततः मेघनादसमीपं गत्वा उक्तवान्– "भवता त्रिंशत्सहस्रेण रजतनाणकैः किरीटं क्रीतं खलु? तावन्ति नाणकानि स्वीकृत्य तत् मह्यं ददातु" इति।

"तत् कथं वा शक्येत देवदत्त! अहं तु रत्नवणिक्। रत्नवाणिज्ये द्विगुणितेन लाभेन खलु विक्रयणं प्रचलति? अतः मया किरीटार्थं यावत् व्ययितं ततोऽपि द्विगुणितं मूल्यं दत्त्वा तत् प्राप्तुम् अर्हति भवान्" इति उक्तवान् मेघनादः।

प्रतीकारं साधयितुम् इच्छन् सः एवं वदति इति जानन् अपि शान्तरूपेण स्थितवान् देवदत्तः। पुनरपि ग्रामात् गत्वा विभिन्नेषु वाणिज्येषु प्रवृत्तः सः लाभरूपेण लक्षशः रजतनाणकानि सम्पादितवान्।

सः पुनरपि मेघनादसमीपं गत्वा उक्तवान्– "स्वीकरोतु, अत्र लक्षाधिकानि रजतनाणकानि सन्ति। किरीटं मह्यं ददातु" इति।

मेघनादः आश्चर्यं प्रकटयन् पृष्टवान्– "यस्य किरीटस्य मूल्यं १०-२० सहस्ररजतनाणकात्मकं स्यात् तस्य निमित्तं लक्षाधिकम् अपि व्ययीकर्तुं सिद्धः भवान्! एवं तर्हि किरीटे तादृशं वैशिष्ट्यं किम् अस्ति?" इति।

"भवान् किरीटस्य मूल्यं यावत् वदति तावत् दातुं सिद्धः अहम्। किन्तु तदीयं रहस्यं न उद्घाटयिष्यामि" इति दृढस्वरेण उक्तवान् देवदत्तः।

मेघनादः क्षणकालम् आलोच्य उक्तवान्– "समग्रम् ऐश्वर्यं दत्त्वा इतः निर्गन्तुं भवान् सिद्धः चेत् किरीटं दास्यामि" इति।

'किरीटसाहाय्येन युवराज्ञी परिणेतव्या' इति एकः एव विचारः देवदत्तस्य। अतः सः मेघनादस्य प्रस्तावम् अङ्गीकृत्य समग्रम् ऐश्वर्यं मेघनादाय दत्त्वा किरीटं स्वायत्तीकृतवान्।

किरीटार्थं यावत् व्ययितं तावत् पुनरपि सम्पादयितुं शक्यते इति दृढः विश्वासः आसीत् देवदत्तस्य।

'पुनरपि वाणिज्येन धनसम्पादनं नाम विलम्बस्य कारणम्। इदानीं तु मम नाम सर्वत्र प्रसिद्धम् अस्ति। अतः अहं कुतश्चित्

ऋणं प्राप्य वेषभूषादिकं क्रीत्वा किरीटं च धृत्वा राजदर्शनं करोमि। ऋणं तु अनन्तरकाले एव प्रत्यर्पयिष्यामि' इति आलोचितवान् देवदत्तः।

किन्तु दौर्भाग्यं नाम सः कुतश्चित् अपि ऋणं प्राप्तुं न शक्तवान्। प्रत्युत,दिने दिने तस्य परिस्थितिः तथा शोचनीयतां गता यत् सः उदरपूरणार्थम् अपि क्लेशम् अनुभवति।

एतादृशस्थितौ कानिचन दिनानि यापयित्वा देवदत्तः अन्ते मनसि किमपि निश्चित्य मेघनादसमीपं गत्वा– "रहस्यकथनपूर्वकम् एतत् किरीटं भवते दातुम् एव अहम् आगतवान्। एतत् शिरसि धृत्वा राजोचितेन वेषेण महाराजसमीपं गतं चेत् किरीटमाहात्म्यात् महाराजः युवराज्ञीं ददाति। कृपया एतत् किरीटं स्वीकृत्य मह्यं किञ्चित् धनं ददातु। केनापि वाणिज्येन जीविष्यामि" इति दैन्येन प्रार्थितवान्।



मेघनादः किरीटं स्वीकृत्य उक्तवान्– "भवते धनं दत्तं चेत् भवान् ममैव प्रतिस्पर्धी भविष्यति। यथाकथम् अपि भवान् मम वाणिज्यमार्गे कण्टकम् एव। अतः धनम् अपि न दीयते, किरीटम् अपि न प्रत्यर्प्यते। इतः गच्छतु। अन्यथा सेवकः अर्धचन्द्रप्रयोगं करिष्यति" इति।

देवदत्तस्य तु इदानीं शोचनीया स्थितिः। सः प्रतिवचनं किमपि दातुम् अनिच्छन् ततः निर्गत्य यत्रकुत्रापि अटन् कथञ्चित् लघुवाणिज्यम् आरब्धवान्।

दैवयोगात् तदीयं वाणिज्यं लाभदायि अभवत्। एवं स्थिते एकदा भिक्षुकवेषधारी कश्चित् तस्य समीपम् आगत्य उक्तवान्– "देवदत्त! अहं मेघनादः। दुर्दैववशात् वाणिज्ये मम सर्वस्वं नष्टम्। इदानीं भिक्षुकत्वम् प्राप्तवान् अस्मि। अत्र भवतः स्थितिः श्रुता। अतः भवदीयं किरीटं प्रत्यर्पयितुम् अहम् अत्र आगतः। एतत् किरीटं स्वीकृत्य युवराज्ञीं परिणीय भवान् एव सुखेन जीवतु" इति।

तदा देवदत्तः– "किरीटं मह्यं मास्तु। तत् भवतः समीपे एव तिष्ठतु नाम" इति उक्त्वा मेघनादं ततः प्रेषितवान्।

वेतालः एवं कथां समाप्य अवदत्– "अये, महाराज! अपूर्वस्य किरीटस्य साहाय्येन युवराज्ञी परिणेतव्या इति खलु देवदत्तस्य प्रबला इच्छा आसीत्? तदर्थम् एव खलु सर्वस्वम् अपि दत्त्वा सः मेघनादतः किरीटं प्राप्तवान्? तथापि किमर्थं सः किरीटस्य रहस्यम् उक्त्वा तत् मेघनादाय दत्तवान्? किरीटं दुरदृष्टकरम् इत्यतः एव नन्दगुप्तः, देवदत्तः, मेघनादः च दारिद्र्यं प्राप्तवन्तः इति चिन्तयति वा भवान्? एवं तर्हि यः तत् किरीटं स्वसमीपे न्यासरूपेण स्थापितवान् आसीत् सः किमर्थं दारिद्र्यं न प्राप्तवान्?' एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान्– "अये वेताल! तत् किरीटं यः धरति तं युवराज्ञी परिणेष्यति इति यत् श्रूयते स्म तत् प्रायः मिथ्या एव। वस्तुतः तत् किरीटं दुरदृष्टकरम् एव। तस्य अन्तः कापि दुष्टा शक्तिः स्थिता स्यात्। अन्यस्य उपरि सुलभतया दुर्दैवम् आरोपयितुं केनचित् तादृशी कथा कल्पिता स्यात्।

एतत् सत्यं देवदत्तः अनुभवबलात् विलम्बेन अपि ज्ञातवान्। अतः सः स्वप्रतिस्पर्धिनः उपरि दुर्दैवम् आरोपयितुम् इच्छन् किरीटरहस्यम् उक्त्वा लोभम् उत्पाद्य किरीटं दत्तवान्। देवदत्तेन यथा चिन्तितं तथैव मेघनादः निर्धनः जातः। मेघनादः किरीटस्य वास्तविकं स्वरूपं ज्ञात्वा प्रत्यर्पयितुं यदा आगतवान् तदा देवदत्तः न स्वीकृतवान्। दिने दृष्टे कूपे रात्रौ को वा पतेत्? यः न्यासरूपेण तत् स्वसमीपे स्थापितवान् आसीत् तस्य धनिकस्य तु दृष्टिः केवलं लाभसम्पादनं, तावदेव। सः किरीटमाहात्म्यात् किमपि प्राप्तुं न इष्टवान्। अतः एव सः हानिं न अनुभूतवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः यथापूर्वम् अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।





# सद्गुणी पावोस्पान्

चीनादेशे कस्मिंश्चित् ग्रामे पावोस्पान्नामकः कश्चन तरुणः विद्वान् आसीत्। सः परीक्षाम् उत्तर्तुम् इच्छन् राजधानीं प्रति प्रस्थितवान्।

मार्गे सः राजधानीं गच्छन्तम् अन्यं पण्डितं दृष्टवान्। सः पण्डितः उरोवेदनया पीड्यमानः कथञ्चित् गच्छन् आसीत्। पावो साहाय्यं कर्तुम् उद्युक्तः जातः। किन्तु तदीयाः प्रयत्नाः विफलाः। कासुचित् एव घण्टासु सः प्राणान् त्यक्तवान्। मृतस्य नाम-कुल-गोत्रादिकं जन्मस्थलं वा पावो न जानाति। मृतस्य स्यूते दश रजतनाणकानि कानिचन कागदानि च आसन्।

पावो तैः कागदैः शवम् आच्छादितवान्। एकेन रजतनाणकेन उत्तरक्रियार्थम् अपेक्षितानि वस्तूनि क्रीतवान्। अनन्तरं शवपेटिकायां शवं शाययित्वा शवस्य शिरसः अधः नव रजतनाणकानि स्थापयित्वा शवपेटिकां निखातवान्।

अनन्तरं राजधानीं गत्वा परीक्षायाम् उपस्थाय उत्तमान् अङ्कान् प्राप्य उत्तीर्णः अभवत्। अल्पे एव काले तदीयं नाम सर्वत्र प्रसृतम्।

एकदा काचित् विचित्रा घटना प्रवृत्ता। कश्चन अपरिचितः अश्वः राजधानीस्थस्य पावोस्पानस्य समीपम् आगच्छत्। बहुधा निवारितः अपि सः अन्यत्र न अगच्छत्। अन्यः समीपम् आगच्छति चेत् महान्तं कोपं प्रदर्शयति अपि। अनन्यगतिकः पावो तम् अश्वं स्वसमीपे एव स्थापितवान्।

कदाचित् पावो तम् अश्वम् आरुह्य ग्रामं प्रति प्रस्थितवान्। मार्गे सः कथमपि मार्गभ्रष्टः अभवत्। एवम् एव किञ्चिद्दूरं गमनानन्तरं एकं भवनं दृष्टवान् पावो। 'अत्र

"चीनादेशस्य जानपदकथा"

कुलीनः कोऽपि वसति इति भाति। अतः अद्य रात्रौ अत्र वसत्यर्थम् अवकाशः लभ्येत' इति आलोच्य पावो द्वारसमीपं गत्वा स्वनाम चिटिकायां विलिख्य तां चिटिकां सेवकस्य हस्ते यच्छन् उक्तवान्– "अत्रत्यं यजमानं द्रष्टुम् इच्छामि। कृपया निवेदयत" इति।

सः सेवकः पावोस्पानेन आरूढम् अश्वं परीक्षादृष्ट्या पश्यन् अन्तः गत्वा यजमानम् उक्तवान्– "श्रीमन्! केनचित् आगन्तुकेन एषा चिटिका दत्ता। अदृश्यतां गतस्य अस्माकम् अश्वस्य चोरः एषः एव" इति।

गृहस्य यजमानः चिटिकायां लिखितं नाम-'पावोस्पान्' इति – पठितवान्। "एषः महापण्डितः। आदरेण एतम् अन्तः आनयत" इति सेवकम् आदिष्टवान् च।

अन्तः आगतं पावोस्पानं सत्कृत्य यजमानः वार्तालापमध्ये पृष्टवान्– "गतवर्षे अदृश्यतां गतः मम अश्वः भवता कथं प्राप्तः?" इति।

"एषः स्वयं मम गृहम् आगच्छत्" इति वदन् पावो अश्वः केन प्रकारेण प्राप्तः इति, राजधानीं प्रति गमनसमये उरोवेदनया पीडितः अपरिचितः पण्डितः कथं मृतः इति च विस्तरेण निवेदितवान्।

तदा सः यजमानः गद्गदस्वरेण उक्तवान्– "सः मम पुत्रः एव स्यात् प्रायः" इति।

अनन्तरदिने एव पावोस्पानेन सह गत्वा सः गृहस्य यजमानः शवपेटिकां भूमितः बहिः आनीतवान्। शवपेटिकायाः उद्घाटनेन ज्ञातं यत् सः पण्डितः एतस्य यजमानस्य पुत्रः एव इति। सः अश्वः स्वयजमानस्य गन्धम् आघ्राय शवपेटिकास्थानं ज्ञात्वा पावोस्पान्पर्यन्तं गत्वा तम् आनीतवाभ् आसीत्।

अपरिचितस्य अपि विषये पावोस्पानेन प्रदर्शितं सद्भावं दृष्ट्वा सः यजमानः अतीव सन्तुष्टः। सः साक्षात् राजधानीं गत्वा पावोस्पानस्य सद्गुणान् महाराजं निवेदितवान्। सन्तुष्टः महाराजः पावोस्पानं न्यायाधीशस्थाने नियुक्तवान्।



# चन्दमामानुबन्धः—१
# ज्ञानवारिधिः

एतन्मासीयम् ऐतिहासिकं व्यक्तित्वम्—

## गुरुनानकः



पञ्जाबराज्ये १४६९तमे वर्षे कार्तिक (नवम्बर्) मासे कौमुदीमय्यां रात्रौ गुरुनानकः जन्म प्राप्तवान्। यतः नानकः जातः अतः स च ग्रामः अनन्तरकाले 'ननकाना' नाम्ना प्रसिद्धः अभवत्।

शालायां शिक्षकः यावतः प्रश्नान् पृच्छति ततोऽप्यधिकान् प्रश्नान् एषः एव शिक्षकं पृच्छति स्म। तस्य प्रश्नाः दैवसम्बन्धे सत्यसम्बन्धे च भवन्ति स्म। चतुर्दशे वयसि एव पिता एतस्य विवाहं निर्वर्तितवान्। तं सुलतानपुरं प्रति प्रेषितवान् च। तत्र एषः कञ्चन उद्योगं प्राप्तवान्। सः वेतनत्वेन यावत् प्राप्नोति तत्र अधिकं भागं दरिद्रेभ्यः ददाति। एतादृशात् अपि जीवनात् सः अचिरात् एव विरक्तः अभवत्। अतः सः उद्योगं परित्यज्य, प्रवासं कुर्वन् देवस्य एकत्वं सर्वसमानतां च सर्वत्र बोधितवान्। हिन्दुधर्मानुगुणं वा भवतु इस्लामूमतानुसारं वा भवतु, सत्यं तु कस्याः अपि एकस्याः व्यक्तेः अधीनं न इति सः प्रतिपादितवान्। परमसहिष्णुता, परे ब्रह्मणि अचलः विश्वासः इति एतदुभयं तस्य भाषणस्य सारः।

एषः स्वजीवितकालस्य अन्तिमे भागे बीसनद्याः तीरे कर्तारपुरनगरे स्थितवान्। तेन यत् प्रतिपादितं तदेव सिक्खमतरूपेण प्रसिद्धम् अभवत्। सप्ततितमे वर्षे एषः भगवतः पादाम्बुजम् आश्रितवान्। तदीयं कलेवरं क्षौमवस्त्रेण आच्छादितम्। उत्तराधिकार-विषये हिन्दूनां यवनानां च मध्ये विवादः उत्पन्नः इति श्रूयते। किन्तु यदा क्षौमवस्त्रम् अपसारितं तदा तत्र कानिचन पुष्पाणि दृष्टानि, तावदेव। भक्ताः तानि पुष्पाणि भक्त्या स्वीकृतवन्तः।

## सः कः स्यात्?

एकस्याम् अमावास्यारात्रौ कश्चन युवकः एकाकी नदीतटे स्थितं महाकालीमन्दिरं प्रविष्टवान्। सः उच्चैः रुदन् महाकालीं निवेदितवान्— "अद्य प्राप्तात् अवमानात् जीवने मम इच्छा एव लुप्ता। भवत्याः पुरतः एव मरणं प्राप्नोमि, तदपि अत्र, इदानीम् एव" इति।

"तथा मा करोतु। तथाकरणेन भवदीयः आत्मा इतोऽपि क्लेशम् अनुभवेत्" इति केनचित् दिव्येन कण्ठस्वरेण सूचितम्।

तदा सः युवकः प्रार्थितवान्— "तथा चेत् अम्ब! भवती मां पण्डितं करोतु" इति।

"वत्स! भवतः ज्ञानम् इतोऽपि न पक्वम्। इतः सप्तानां जन्मनाम् अनन्तरम् एव भवान् पण्डितः भवितुम् अर्हति" इति सूचितं तेन कण्ठस्वरेण।

"तथा चेत् अयम् अहं मरणं प्राप्तवान् एव" इति वदन् सः युवकः आत्मनः शिरसः च्छेदार्थम् उद्युक्तः जातः।

तदा प्रत्यक्षीभूता माता तं तस्मात् प्रयत्नात् निवार्य सप्तवारं तं मारयन्ती जनयन्ती च अनुगृहीतवती। सः युवकः पण्डितत्वं प्राप्य मन्दिरतः बहिः आगतवान्।

एतस्यां कथायां प्रस्तुतः युवकः सः कः स्यात्? (उत्तरम् अष्टमे पृष्ठे)

# विज्ञानविनोदः
# आकर्षणम्



## एवं कुर्वन्तु

संश्लेषकस्य साहाय्येन पिंग्-पांग् कन्दुके दृढसूत्रं योजयन्तु। कन्दुकं जलधारां यथा स्पृशेत् तथा चित्रे दर्शितेन क्रमेण गृह्णन्तु। अनन्तरं सावधानतया सूत्रसहितं भवतः हस्तं जलधारायाः दिशि नयतु। चलता जलेन कन्दुकम् आकृष्टम् इव भासते वा? जलधारायाः अङ्गरूपेण कन्दुकं तिष्ठति किम्?

## किं भवति? किमर्थं च भवति?

पतन्त्या जलधारया कन्दुकम् आकृष्टम् इव भासते। जलं द्रवरूपं वेगयुतं च इत्यतः तथा भानं भवति। चलत् जलं यस्यां दिशि प्रवहति तस्यां दिशि तस्य वेगः अपि अधिकः भवति। पार्श्वयोः वेगः क्षीणः भवति। अतः एव कन्दुकस्य अपरस्मिन् पार्श्वे स्थितः वायुः यावत् बलं प्रयुङ्क्ते ततोऽपि न्यूनं बलं प्रयुङ्क्ते जलम्।

यदा जलधारा वेगेन पतति तदा कन्दुकं ततः अपसारयितुं किं कष्टम्? यदा जलधारा मन्दं पतति तदा कः अनुभवः? नलिकातः यावदधिकवेगेन जलधारां पातयितुं शक्यते तावता वेगेन जलं यथा प्रवहेत् तथा नलिकां प्रवर्तयतु। इदानीं जलधारातः कन्दुकम् अपसारयितुं कियत् बलम् आवश्यकं भवति?

केवलं पिंग्-पांग् कन्दुकस्वीकारे एव एवम् अनुभवः, उत इतरेषु कन्दुकेषु स्वीकृतेषु अपि एवम् एव? परिणामं ज्ञातुं कुतो वा स्वप्रयत्नः न करणीयः?

यदि वायुपूर्णं फूद्गकं (Balloon) कागदभागः वा मार्गस्य पार्श्वे स्थितं स्यात्, तत्रैव कार्यानं वेगेन गतं स्यात् तर्हि तत् फूद्गकं कागदं वा कार्यानम् अनुसरति, सत्यं खलु? इदानीं ज्ञातं स्यात् खलु, किमर्थम् एवं भवति इति?



## प्रपञ्चस्य अद्भुतानि

### पिरमिड्भवनानि

पञ्चसहस्रवर्षेभ्यः पूर्वं ईजिप्ट्देशं फराहूनामकाः प्रबलाः राजानः पालयन्ति स्म। यदा एक. फराह् मृतः भवति तदा तदीयं शरीरं सुरभीकृत्य शवपेटिकायां सुरक्षितरूपेण स्थाप्यते स्म। शवपेटिकां भूमौ गर्ते स्थापयित्वा तदुपरि स्मारकं निर्मीयते स्म। स्मारकस्य तलं चतुरस्राकारकं, चतस्रः भित्तयः च त्रिकोणाकारिकाः भवन्ति स्म।

एवं निर्मितेषु बहूनि नष्टानि। अवशिष्टेषु कैरोनगरस्य समीपे मरुभूमौ स्थितानि त्रीणि पिरमिड्भवनानि अपूर्वाणि सन्ति। तेषु खुफुराजस्य (चियोप्स् इत्यस्य वा) पिरमिड् अतिपुरातनम् अत्युन्नतं च। मानवैः निर्मितम् एतादृशम् अखण्डं भवनम् एतत् एकम् एव इति विश्वासः अस्ति लोके।

रोमनगरस्थं सेण्ट् पीटर्स केथड्रल्, वेस्ट् मिनिष्टर् एब्बे, अन्ये त्रयः प्रसिद्धाः क्रिस्तदेवालयाः (Churches) इत्यादीनि प्रसिद्धस्मारकाणि आहत्य यावत् स्थलम् आक्रम्य तिष्ठन्ति ततोऽप्यधिकं स्थलम् एतत् पिरमिड् आक्रामति।

एतस्य भवनस्य निर्माणार्थं १००,००० जनाः विंशतिवर्षाणि यावत् कार्यं कृतवन्तः। एतस्य निर्माणं च ४,७०० वर्षेभ्यः पूर्वं जातम्।

आधुनिकः लेखकः एरिच् वन् दनिकर्स् पिरमिड्विषये वदति– "इदानीं विंशतितमे शतके, नूतनानि तन्त्राणि सामग्र्यः च उपलभ्यमानानि सन्ति चेदपि एतादृशस्य अपरस्य भवनस्य निर्माणं कर्तुं कोऽपि शिल्पी न शक्नोति" इति।



# मोसेस्कृतानि अद्भुतकार्याणि

सहस्राधिकवर्षेभ्यः पूर्वं प्रवृत्ता घटना एषा। फराह्महाराजस्य पुत्री नैल्नद्यां स्नानं कुर्वती आसीत्। तत्समये सा प्लवमाने करण्डके स्थितं मासत्रयवयस्कं सुन्दरं शिशुं दृष्टवती। आश्चर्यचकिता सा तं शिशुं रक्षितवती।

हिब्रूजनानां सङ्ख्या अधिका भवेत् इति आशङ्कया फराह्महाराजः तेषु दिनेषु असङ्ख्यान् शिशून् नद्यां निमज्जयन् आसीत्। 'एषः बालः अपि महाराजेन निमज्जितः एव स्यात्' इति तर्कितवती राजकुमारी।

शिशोः भगिनी दूरात् एतत्सर्वं पश्यन्ती



आसीत्। सा राजकुमार्याः समीपम् आगत्य "शिशोः पालनार्थं धात्री आवश्यकी वा?" इति पृष्टवती। राजकुमारी तस्यै तं शिशुं दत्तवती। सा बालिका शिशुं मातृसमीपं नीतवती।

एवं दैवयोगात् तस्य शिशोः जन्मदात्री माता एव पोषिका अपि अभवत्। राजपुत्र्याः रक्षणम् आसीत् इत्यतः बालकः निर्विघ्नं प्रवृद्धः।

हिब्रूजनाः इजिप्शन् जनैः बहुधा पीड्यन्ते स्म। हिब्रूजनैः दासवृत्तिः करणीया भवति स्म। क्षुल्लकैः कारणैः अपि ते पीडिताः मारिताः वा भवन्ति स्म।

'ओल्ट् टेस्टमेण्ट्' नामकस्य ग्रन्थस्य 'एक्सोडस्' नामकात् अध्यायात् ज्ञायते यत् मोसेस्महोदयः ज्वलति गुल्मे स्थिताम् अपि अज्वलन्तीम् एकां देवमूर्तिं प्राप्तवान् इति। हिब्रूजनानां नायकत्वम् अङ्गीकरणीयम् इति देवेन उक्तम्। येन अद्भुकार्येण हिब्रूजनाः विश्वासं प्राप्नुयुः तत् कथं करणीयम् इत्यपि देवः सूचितवान्।

ईजिप्ट्तः हिब्रूजनानां निर्गमनार्थम् अनुमतिः यथा लभ्येत तथा बहुधा प्रयत्नं कृतवान् मोसेस्। किन्तु फराहराजः तथा अनुमतिं दातुं निराकृतवान्। तदा मोसेस् निरन्तरतया बहूनि अद्भुतकार्याणि प्रदर्शयितुम् आरब्धवान्।

नदीजलं रक्तम् अभवत्। समग्रः देशः मण्डूक-शलभादिभिः व्याप्तः अभवत्। भयङ्करेण चण्डमारुतेन सस्यसमृद्धिः नाशिता। प्लेग्रोगः सर्वत्र प्रसृतः। इजिप्शन् जनानां प्रथमसन्ततिः अपि



नष्टा। अन्ते फराह्महाराजः हिब्रूजनानां निर्गमनम् अङ्गीकृतवान्।

मोसेस् स्वकीयान् जनान् इस्रेल्देशं प्रति नेतुम् प्रयत्नम् आरब्धवान्। सर्वे ते रक्तसमुद्रस्य (रेड् सी) तीरम् आगतवन्तः। तदा समुद्रः आत्मानं विभज्य मार्गम् उपकल्पयन् मोसेस्महोदयस्य तदीयानां जनानां च गमनार्थम् अवकाशं कल्पितवान्। किन्तु यदा इजिप्शन्जनाः मनःपरिवर्तनं प्राप्य हिब्रूजनान् अनुसरन्तः शुष्कं समुद्रमार्गं प्रविष्टवन्तः तदा तेषाम् उपरि जलम् उभयतः पतितम्। ते सर्वे जले निमग्नाः अभवन्।

हिब्रूजनाः स्वकीयां भूमिं प्राप्तवन्तः। किन्तु ततः पूर्वं मार्गे एव मोसेस्महोदयस्य अन्तिमश्वासाः निर्गताः।

एषा घटना भागशः ऐतिहासिकी इति गण्यते। एषा एव घटना नूतनस्य राष्ट्राङ्कुरस्य उत्पत्तौ बीजम्।

## भारतीये इतिहासे कटाक्षपातः



१. कस्य नगरस्य नाम्नः निर्वचनं द्वयोः नद्योः नामभ्यां भवति?
(अ) तयोः नद्योः नाम किम्?
(आ) ते नदी कया महानद्या मिलतः?
(इ) किं निमित्तं तत् नगरं प्रसिद्धम्?

२. मातुः वंशस्य नाम्ना सुप्रसिद्धः भारतस्य आक्रामकः कः?
(अ) सः कदा भारतम् आगतवान्?
(आ) तेन स्थापितस्य वंशस्य नाम किम्?
(इ) तस्य पुरुषस्य प्रसिद्धः पूर्वजः कः?

३. अकबर्महाराजस्य आधिकारिकलेखस्य नाम किम्?
(अ) तस्य लेखस्य लेखकः कः?
(आ) तेन लेखकेन लिखितस्य अन्यस्य पुस्तकस्य नाम किम्? उभयोः पुस्तकयोः च कः भेदः?

४. प्राचीने काले दक्षिणभारतं पालितवन्तः त्रयः प्रसिद्धाः वंशाः के?

(उत्तराणि अष्टमे पृष्ठे)

## वस्तुस्थितेः वैज्ञानिकान्वेषणस्य संशोधनस्य च प्रपञ्चः

१. कः नियान् दीपं प्रस्तुतीकृतवान्? तच्च कदा?
२. वैद्युतेन मानेन एकस्य तडित्स्फुरणस्य का शक्तिः?
३. प्रपञ्चस्य किं वयः?
४. दूरदर्शकयन्त्रं (Telescope) कदा केन अन्विष्टम्?
५. सूर्यः सदा भूमितः समाने दूरे तिष्ठति किम्?
६. UFO द्रष्टुं कोऽपि निश्चितः कालः अस्ति वा?
७. कस्मिन् देशे अत्यधिकसङ्ख्याकाः पत्रिकाः सन्ति?
८. मानवस्य हस्तस्य चतुरस्राङ्गुलपरिमिते प्रदेशे कियत्परिमाणिकाः नाड्यः भवन्ति?
९. उष्ट्रः यावत्कालं विना जलं तिष्ठति ततोऽप्यधिककालं कः प्राणी जलं विना तिष्ठति?
१०. कस्य प्राणिनः गन्धः अर्धक्रोशदूरात् एव ज्ञायते?

(उत्तराणि अष्टमे पृष्ठे)




१) अधिकसङ्ख्याकैः पठितः भारतीयः तत्त्वग्रन्थः कः?

(अ) तस्मिन् ग्रन्थे कति अध्यायाः सन्ति?

(आ) कस्मिन् महाग्रन्थे एषः अन्तर्भवति?

(इ) एतस्य ग्रन्थस्य लेखकत्वेन परिगण्यमानः ऋषिः कः?

२) सुप्रसिद्धः भारतीयः महाकविः कः, यश्च पद्यकाव्यानि, रूपकाणि च लिखितवान्? यस्य च वास्तविकं नाम न ज्ञायते अपि?

(अ) येन नाम्ना सः ख्यातः, तन्नाम किमर्थम् आगतम्?

(आ) तेन रचितानि रूपकाणि कानि?

(इ) तेन रचितानि पद्यकाव्यानि कानि?

३) प्राचीनात् ग्रन्थात् ज्ञायते यत् किञ्चन नगरं कयाचित् महिलया भस्मीकृतम् इति। तस्य नगरस्य नाम किम्?

(अ) तस्याः महिलायाः नाम किम्?

(आ) यतः एषः विषयः ज्ञायते तस्य ग्रन्थस्य नाम किम्? तं कः लिखितवान्? स च ग्रन्थः कया भाषया उपनिबद्धः? कस्मिन् काले स च लिखितः?

(उत्तराणि अष्टमे पृष्ठे)

## जानीम एकं शब्दं
## प्रमुखासु भारतीयभाषासु

अस्सामीस् - छात्र, बङ्गाली - छात्र, इंग्लीष् - स्टुडेण्ट्, गुजराती - विद्यार्थि, हिन्दी - छात्र, कन्नड - विद्यार्थि, काश्मीरी - शागिर्द्, मलयालम् - विद्यार्थि, मराठी - विद्यार्थि, ओरिया - छात्र, पञ्जाबी - विद्यार्थि, संस्कृतम् - विद्यार्थी, सिन्धि - सागिर्दु, तमिळ् - मनवन्, तेलुगु - विद्यार्थि, उर्दु - तलिबिल्म्।

# अपि भवान् विश्वसिति?

* आर्याः अन्यस्मात् प्रदेशात् भातरम् आगताः इति?
* अमेरिकादेशं कोलम्बस् एव सर्वप्रथमं प्राप्तवान् इति?
* कांगरूप्राणिनः केवलम्, उपजठरम् (Pouch) भवति इति?

# न तथा

* आश्चर्यं नाम एतं वादं पुरस्कर्तुं किमपि प्रमाणं न लब्धम्। तर्कबलात् एवं निरूप्यते, तावदेव।
* न, नार्वेनायकः लीफ् एरिक्सन् १०००तमे वर्षे अमेरिकां प्राप्तवान्।
* न, एतादृशं वैशिष्ट्यं प्राप्तवत्सु कांगरू अपि अन्यतमः तावदेव। कौलाजातीयाः भल्लूकाः, अप्पोसम्स्, केचन जतुकाः (wombats) इत्यादीनाम् अपि उपजठरं भवति।

# उत्तराणि

## सः कः स्यात्?

सः प्रसिद्धः कविः कालिदासः। जनप्रियकथानुसारं सः कश्चन मुग्धः। तद्देशीया युवराज्ञी घोषितवती यत् मम पाण्डित्यापेक्षया यस्य पाण्डित्यम् अधिकं भवति तम् एव अहं परिणेष्यामि इति। विवाहम् अपेक्ष्य आगताः बहवः तया निराकृताः। प्रतीकारं साधयितुम् इच्छन्तः ते कालिदासम् आनीय एषः महापण्डितः इति उक्तवन्तः। वस्तुस्थितिं जिज्ञासमाना सा तं परिणीतवती, अनन्तरं तं गृहात् निष्कासितवती च। अनन्तरं यत् प्रवृत्तं तत् तु ज्ञायते एव भवद्भिः।

## इतिहासः

१. वाराणसी
(अ) वरुणा असी च। (आ) गङ्गया। (इ) 'विश्वेश्वर' इति ख्यातस्य शिवस्य मन्दिरात् हेतोः।
२. बाबर् – तस्य मातुः मोङ्गल् वंशः, किन्तु सः मुघलवंशीयः इत्येव ख्यातः।
(अ) १५२६ तमे वर्षे। (आ) मुघलवंशः। (इ) मोङ्गलवंशप्रमुखः चङ्गेसुखान्।
३. अकबरनामाह
(अ) अबुल् फजल्। (आ) एन्-इ-अकबरी। (इ) अकबर्शासनस्य सम्बन्धि सङ्ख्यादिविवरणात्मकं पुस्तकम्।
४. चोलाः, पाण्ड्याः, चेराः च।

## विज्ञानम्

१. जार्ज् क्लाड्, फ्रान्स्देशीयः प्राणिशास्त्रज्ञः। १९१०तमे वर्षे डिसेम्बर् तृतीये दिनाङ्के प्यारीस् मोटार् प्रदर्शिन्यां सर्वप्रथमं प्रस्तुतीकृतम्।
२. ७,७५० मिलियन् किलोव्याट्स् भवेत्।
३. १५-२० खर्ववर्षाणां मध्ये।
४. १९०८तमे वर्षे अक्टोबर् द्वितीये दिनाङ्के हान्स् लिप्परषे महोदयः अन्विष्टवान् इति प्रसिद्धिः अस्ति। किन्तु एषा योजना उपनेत्रेण क्रीडतः, तदीयसाहाय्यकस्य बालकस्य मनसि स्फुरिता इति ज्ञायते।
५. शिशिरकालापेक्षया ग्रीष्मकाले ३ मिलियन् मैल् यावत् समीपे भवति।
६. अङ्गारकः (Mars) यदा भूम्याः समीपे भवति तदा अधिकानि UFO द्रष्टुं शक्यानि। इतरेषु कालेषु तावत् न शक्यते। कारणं यत्किमपि भवतु नाम।
७. अमेरिकादेशे। (U.S.A.) जगति यावत्यः पत्रिकाः भवन्ति तासु अर्धात् अधिकाः पत्रिकाः अमेरिकादेशे केनडादेशे च प्रकाश्यन्ते।
८. ७२ द्वादशाङ्गुलमितं नरमण्डलम्।
९. चित्रोष्ट्रः। (Giraffe)
१०. गन्धमार्जारस्य। (Civet)

## साहित्यम्

१. भगवद्गीता। कृष्णार्जुनयोः सम्भाषणरूपेण अस्ति।
(अ) अष्टादश। (आ) महाभारतस्य (शान्तिपर्वणि)। (इ) व्यासः।
२. कालिदासः।
(अ) यतः सः महाकाल्याः अनुग्रहेण पण्डितः जातः। (आ) मालविकाग्निमित्रम्, विक्रमोर्वशीयम्, अभिज्ञानशाकुन्तलम्। (इ) रघुवंशः, कुमारसम्भवम्, मेघदूतम्।
३. मधुरै।
(अ) कण्णगी। (आ) शिलप्पदिकारम् द्विसहस्रवर्षेभ्यः पूर्वं प्रिन्स् इलाङ्गो अडिगळ् महोदयेन तमिळ्भाषया लिखितम्।

काव्यकथा -

# मणिमञ्जीरम्-१



द्विसहस्रवर्षेभ्यः पूर्वं कावेरी-समुद्रयोः सङ्गमस्थले पूम्पुहार्नामकं नगरम् आसीत्। एतत् चोलराजानां राजधानी आसीत्। अत्र अनेके देवालयाः उत्तमभवनानि च आसन्।

चोलराजानः धर्मेण राज्यं परिपालयन्ति स्म। ते कलापोषकाः अपि आसन्। तेषां शासने जनाः सुखेन निवसन्ति स्म। न केवलं भारतदेशस्थानां राज्येभ्यः, ग्रीस्-रोम्प्रभृतिभ्यः देशेभ्यः अपि राजदूताः पण्डिताः च चोलराजानां दर्शनार्थम् आगच्छन्ति स्म।





सुदूरात् प्रान्तात् नौकाः पूम्पुहारनौकास्थानम् आगच्छन्ति स्म । एतन्नगरीयाः नागरिकाः सुसम्पन्नाः प्रामाणिकाः च आसन् । अतः अत्र वाणिज्यं कर्तुं सर्वे वणिजः उत्साहिनः भवन्ति स्म ।



पूम्पुहारुनगरस्य वीथीषु वाणिज्यार्थं स्थापितानां रत्न-माणिक्यादीनां राशिः एव दृश्यते स्म। तत् नगरम् इन्द्रनगरी इव ऐश्वर्योपेतम् आसीत्।

एतस्मिन् नगरे मणैकान्नामकः वणिक् निवसति स्म। समुद्रवाणिज्यं तस्य वृत्तिः। तस्य पुत्री कण्णगी। सा सद्गुणसम्पन्ना। सा सौन्दर्येण लक्ष्मीः इव अस्ति इति सर्वत्र प्रसिद्धिः आसीत्।





मणैकान्गृहस्य समीपे एव मासात्तुवान्नामकः आढ्यः वणिक् निवसति स्म। तस्य पुत्रस्य नाम कोवलन् इति। सः अपि मन्मथः इव सुन्दरः, सद्गुणसम्पन्नः च। निर्धनेभ्यः धन दाने तस्य विशेषरतिः।

मणैकान् मासात्तुवान् च आत्मीयौ स्नेहितौ। यदि कोवलन्-कण्णग्योः विवाहः भवेत् तर्हि सम्बन्धः दृढतरः भवेत् इति तौ निश्चितवन्तौ। तयोः एतं निश्चयं सर्वे बहुधा श्लाघितवन्तः।





ज्येष्ठानां सम्मुखे विवाहमुहूर्तः निश्चितः। मङ्गलवाद्यघोषेण सह शोभायात्रया वधूवरौ कल्याणमण्डपं प्रति आनीतौ।

पुरोहितेषु वेदमन्त्रान् उच्चारयत्सु कण्णगी कोवलन् च अग्निं प्रदक्षिणीकृतवन्तौ। विवाहार्थम् आगताः सुमङ्गल्यः गीतं गायन्त्यः पुष्पाणि सुगन्धद्रव्याणि च अवकिरन्त्यः आशिषा अनुगृहीतवत्यः।





गृहम् आगताः अतिथयः विशेषतः सत्करणीयाः, गृहस्थधर्मश्च विना लोपं पालनीयः इति उद्देशेन कोवलनस्य माता वधूवरयोः वसतिनिमित्तं नूतनं भवनम् उपकल्पितवती। कण्णगी-कोवलन् च सुखेन सन्तोषेण च जीवितवन्तौ।

तस्मिन् एव नगरे सौन्दर्यस्य खनी माधवी नाम नटी आसीत्। सा योग्यस्य गुरोः सकाशात् श्रद्धया भक्त्या च नाट्यकलाम् अधीतवती आसीत्।





नाट्याभ्यासस्य समाप्तेः अनन्तरम् एकस्मिन् दिने माधवी पुरप्रमुखान् स्वगृहम् आहूय तेषां सम्मुखे स्वकीयां नाट्यकलाप्रौढतां प्रदर्शितवती।

–(अनुवर्तते)



# बोधनतत्त्वम्

सुधाकरः राजास्थाने उत्तमे उद्योगे अस्ति। तस्य बन्धुप्रेम अधिकम्। बान्धवाः तदा तदा न दृष्टाः चेत् सः अनिर्वचनीयां मानसिकपीडाम् अनुभवति।

एकदा सः विरामसमये नगरे एव स्थितं मातामहस्य गृहं गतवान्। मातामहस्य पुत्रः विशेषतः विद्याभ्यासं कृत्वा अपि उद्योगं कमपि अनिच्छन् गृहे स्थित्वा कृषिकार्ये निरतः आसीत्।

सुधाकरः विनयशीलः मितभाषी च। ज्येष्ठान् सदा विनयेन पश्यति। आत्मनः विषये कदापि सः किमपि न कथयति। यावच्छक्यं परोपकारं कुर्वन् तृप्त्या जीवति सः।

मातामहः सुधाकरं दृष्ट्वा सन्तोषं प्रकटयन् तं स्वसमीपम् आहूय उक्तवान्– "राजास्थाने उच्चोद्योगे तिष्ठन् अपि भवान् प्रीत्या आगतवान्। किन्तु गोपालं पश्यतु, सः ग्रामे कमपि न इच्छति। केनापि न मिलति। सर्वत्र अपि कमपि दोषं पश्यन् प्रदर्शयन् च तिष्ठति। भवान् वा तं हितम् उपदिशतु" इति।

तद्दिने सायङ्काले सुधाकरः मातामहस्य पुत्रं गोपालं स्वसमीपम् आहूय वार्तालापं कुर्वन् व्यवहारविषये सूक्ष्मतया सूचितवान्।

तस्मिन् ग्रामे कृषिकार्ये निरतेषु गोपालः एकः एव विद्यावान्। सः कृषिकार्यस्य तन्त्रम् अपि सम्यक् जानाति। अतः एव जनाः तं विशेषादरेण पश्यन्ति प्रशंसन्ति च।

गोपालः कस्यापि साहाय्यं न करोति। किन्तु सर्वे गोपालस्य साहाय्यार्थं तु आगच्छन्ति स्म एव। अन्येषां कष्टपरिस्थितौ तेषां मौढ्यं दृष्ट्वा गोपालः उपहसति। किन्तु आत्मनः कष्टस्थितौ सर्वे सहानुभूतिं

प्रदर्शयेयुः उपकुर्युः च इति इच्छति। अन्ये सन्तोषं प्राप्नुवन्ति चेत् एषः असूयया असमाधानं प्राप्नोति। आत्मना सन्तोषः प्राप्तः चेत् सर्वे सन्तोषं प्रकटयेयुः इति इच्छति। अन्येषां लोपदोषादिकं निर्दाक्षिण्यं कथयन् गोपालः आत्मना कृतेषु कार्येषु अन्यैः लोपः दृष्टः चेत् क्रुद्धः भवति।

एतत् सर्वं परिशील्य सुधाकरः गोपालम् उक्तवान्– "गोपाल! सर्वस्य कारणम् आत्मा एव। आत्मनि औदार्यं, सहना, सद्गुणाः च वर्धनीयाः। तदा एव भवान् इतरेषु अपि गुणान् श्रेष्ठत्वं च द्रष्टुं शक्नोति। भवन्तम् अपि तदा एव सर्वे गौरवेण पश्यन्ति" इति।

तदा गोपालः असमाधानेन सुधाकरं पृष्टवान्– "एवं च भवतः कथनस्य किं तात्पर्यम्?" इति।

"गोपाल! भवति अहङ्कारः, स्वार्थभावना, अल्पत्वम्, असूया, कोपः, लोभः इत्यादयः दुर्गुणाः सन्ति। तान् सर्वथा परित्यजतु। तदा एव भवान् समग्रे लोके सदंशान् पश्यति, लोकश्च भवन्तम् आदरेण पश्यति" इति उक्तवान् सुधाकरः।

एतत् श्रुतवतः गोपालस्य कोपः इतोऽपि प्रवृद्धः। "एतत् वचनं केनापि अन्येन उक्तं यदि स्यात् तर्हि तस्य सर्वे दन्ताः भग्नाः अभविष्यन्। भवान् तु अतिथिः इत्यतः मौनं सर्वं सहे। अहं कदापि अन्यस्य उपदेशं न इच्छामि" इति उक्तवान् गोपालः।

एतेन सुधाकरः बहुधा खिन्नः। 'अस्थाने



प्रवेशः यः कृतः तस्य फलम् एतत्' इति आलोच्य सः मौनम् आश्रितवान्।

अनन्तरदिने तं ग्रामं महानन्दः नाम योगी आगतवान्। सः ग्रामं ग्रामं गत्वा वेदान्तम् उपदिशति स्म। रात्रौ देवालयस्य प्राङ्गणे तस्य उपन्यासस्य व्यवस्था कृता।

सुधाकरः सामान्यतः एतादृशेषु न आसक्तः। अतः सः 'एतदर्थम् अहं न आगच्छामि' इति उक्तवान्। तदा गोपालः तम् उक्तवान्– "अद्य तु उपन्यासमालायाः प्रथमं दिनम्। मद्गृहसदस्यैः सर्वैः अपि गन्तव्यम् एव। यतः ग्रामज्येष्ठानां कुटुम्बम् अस्माकम्। अस्मदर्थं सभायाम् अग्रिमासन्दाः आरक्षिताः भवन्ति" इति।

अनिच्छन् अपि सुधाकरः योगिनः उपन्यासं श्रोतुं सिद्धः जातः।

जनानां सम्मेलनानन्तरं योगिनः उपन्यासः आरब्धः। सः सद्व्यवहारविषये वदन् सुधाकरेण गोपालाय यत् उक्तं तदेव उक्तवान्।

एतत् श्रुतवतः सुधाकरस्य मनसि आतङ्कः उत्पन्नः– 'क्रुद्धः गोपालः ह्यः मां यथा उक्तवान् तथैव पूज्यं योगिनम् अपि कठोरं वदेत्' इति।

योगिनः उपन्यासः सर्वैः श्रद्धया भक्त्या च श्रुतः। सर्वे यथा जानीयुः तथा सरलया शैल्या मनोरञ्जकैः उदाहरणैः बोधितवान् योगी। वस्तुतः उपन्यासः सुधाकराय अपि अरोचत। तथापि– 'उपन्यासः उत्तमः आसीत् इति वदामि चेत् गोपालः कुपितः भवेत्' इति



आलोच्य सः मौनं स्थितवान्।

गृहं प्रत्यागतः गोपालः योगिनः उपन्यासं विशेषतः प्रशंसन् सुधाकरम् उक्तवान्– "अद्य इव प्रतिदिनम् अपि वयं सर्वे योगिनः उपन्यासं श्रोतुं गच्छेम। उपन्याससमाप्तिपर्यन्तं भवान् मम गृहे एव तिष्ठतु" इति।

एतत् श्रुतवतः सुधाकरस्य महदाश्चर्यम्। 'मया यदा नीतिः बोधिता तदा नितरां क्रुद्धः एषः गोपालः ताम् एव नीतिं योगिना बोध्यमानं विशेषतः इच्छति! एतेन सिध्यति यत् मयि अविद्यमानः कोऽपि विशेषः योगिनि अस्ति। सः कः इति मया ज्ञातव्यम्' इति आलोच्य सुधाकरः अनन्तरदिने योगिनम् एकान्ते दृष्ट्वा स्वकीयं सन्देहं निवेदितवान्।

तत् श्रुत्वा योगी महानन्दः उक्तवान्– "वत्स, सुधाकर! कोऽपि मानवः आत्मनः दोषं न अङ्गीकरोति, आत्मनः दोषाः ज्ञातव्याः इति न इच्छति अपि। एवं स्थिते गोपालं तदीयदोषं ज्ञापयितुं भवान् यत् प्रवृत्तः तत्रैव दोषः अस्ति। एवं तर्हि मम वचनं तस्मै कथम् अरोचत इति भवतः सन्देहः स्यात्। अहं तु समस्तलोकोपकारकं परमार्थं बोधयामि। कमपि व्यक्तिविशेषम् उद्दिश्य न वदामि अपि। यदा सभायाम् उपन्यासं करोमि तदा सर्वे मम निरूपणविषये अवधानवन्तः भवन्ति। माम् उद्दिश्य उक्तम् इति कोऽपि न भावयति। गोपालस्य अपि स्थितिः एषा एव। अहं सर्वान् उद्दिश्य वदन् अस्मि इति भावयन् सः स्वसम्बद्धतां जानन् अपि शान्तरूपेण स्थितवान्। किन्तु यदा मया उक्तायाः नीतेः विमर्शः मनसि प्रचलति तदा अन्तरङ्गं सूचयति– भवते अपि एषा नीतिः अन्वेति इति। अत एव गोपालः अग्रे अपि उत्साहं प्रदर्शितवान्। वस्तुतः बोधनरीतिः एव एषा। व्यक्तिशः साक्षात् कथनापेक्षया समूहे परम्परया कथनम् उचितम्" इति।

इदानीं सुधाकरेण बोधनतत्त्वं सम्यक् ज्ञातम्। सः योगिनं महानन्दं साष्टाङ्गं नमस्कृत्य तृप्तेन मनसा ततः आगतवान्।






ज्येष्ठस्य विकद्रोः वचनानि सश्रद्धं श्रुत्वा कृष्णः उक्तवान्– "भवतः अभिप्रायः ज्ञातः मया। अस्मिन् सन्दर्भे मम मनसि कश्चन उपायः स्फुरति। मथुरानगरस्य अपायः कोऽपि कदापि न भवेत्। तदर्थम् अहम् अग्रजेन बलरामेण सह जरासन्धस्य पुरतः एव दक्षिणदिशम् अनुसरामि। तस्य लक्ष्यभूतौ आवाम् एव। अतः सः मथुराक्रमणं परित्यज्य आवयोः अनुसरणं करिष्यति। विन्ध्याद्रिप्रभृतिषु स्थितेषु दुर्गेषु तिष्ठन्तौ आवां जरासन्धेन सह युद्धं करिष्यावः। एवं करणेन उपस्थिता महती विपत् अपगता भविष्यति, यादवकुलस्य राष्ट्रस्य च हितं सिध्यति" इति।

एतत् श्रुत्वा सर्वे समाधानेन उच्छ्वसन्तः अङ्गीकारं सूचितवन्तः। ज्येष्ठाः अपि कृष्णस्य विचारं महता सन्तोषेण अनुमोदितवन्तः।

अनन्तरं बलरामः कृष्णः च निरायुधौ दुर्गात् निर्गत्य धैर्येण जरासन्धसमीपं गत्वा– "अये मगधमहाराज! विविधदेशीयैः राजाधिराजभिः सह महत्या सेनया समेतः केन उद्देशेन अत्र आगतः इति मया न ज्ञातम्। दूतानां वचनानि अस्पष्टानि आसन्। आगमनोद्देशः स्पष्टतया ज्ञातः चेत् किमपि साहाय्यं कर्तुं शक्येत। अतः उद्देशं कृपया निरूपयतु" इति उक्तवन्तौ।

दूतानां द्वारा बलरामकृष्णयोः आगमनं ज्ञात्वा जरासन्धः कवचादिकं धृत्वा धनुर्बाणादिकं गृहीत्वा तूणीरं चापि गृहीत्वा



बहिः आगतवान् आसीत्। सः बलरामकृष्णौ उक्तवान्– "भवन्तौ एव अत्र आगतवन्तौ खलु? महान् सन्तोषः। 'आवां बलशालिनौ' इति महान् गर्वः अस्ति भवतोः। युद्धे बलस्य निर्णयः भवतु नाम। भवतोः प्राणापहरणं विना मम तृप्तिः नास्ति। अतः युद्धसन्नाहं कृत्वा आगच्छताम्। निरायुधरूपेण आगतौ भवन्तौ महाधूर्तौ" इति।

तस्य वचनं श्रुत्वा बलरामकृष्णौ सहजेन स्वरेण "एवं वा?" इति उक्त्वा दक्षिणदिशम् अनुसृतवन्तौ।

एवं प्रस्थितौ बलरामकृष्णौ बहुषु नगरेषु सञ्चरन्तौ देशान् अनेकान् अतिक्रम्य विन्ध्याटवीं प्रविष्टवन्तौ। सह्यपर्वतं प्रविश्य तत्र महतः वटवृक्षस्य अधः ध्याने मग्नस्य परशुरामस्य आश्रमं प्राप्तवन्तौ।

तत्र परशुरामः शिवार्चनं कुर्वन् आसीत्। तस्य एकस्मिन् पार्श्वे होमधेनुः बद्धा आसीत्। अपरस्मिन् पार्श्वे च यज्ञवस्तूनि कमण्डलुः इत्यादयः आसन्। होमाग्निः कान्त्या प्रज्वलन् आसीत्। समीपे एव शिवधनुः विराजते स्म। बाणाः, परशुः, खड्गः इत्यादीनि आयुधानि अपि तत्र दृश्यन्ते स्म। एवं वीरत्वस्य तापसत्वस्य च प्रकाशकः आसीत् स च आश्रमः।

ब्राह्मेण क्षात्रेण च तेजसा विराजमानस्य परशुरामस्य समीपं गत्वा साष्टाङ्गं नमस्कृत्य बलरामकृष्णौ तस्य स्तोत्रं कृतवन्तौ।

अनन्तरं कृष्णः आगमनकारणं निरूपयन्-"महात्मन्! यमुनानदीतीरे स्थितं मथुरानगरम् आवयोः वसतिस्थानम्। यादवश्रेष्ठः वसुदेवः आवयोः पिता। मम नाम कृष्णः। एषः मम अग्रजः बलरामः। कंसात् भीतः मम पिता जातमात्रं मां गोकुलं प्रेषितवान्। आवयोः वर्धनं तत्रैव जातम्। अनन्तरम् आवां मथुरानगरं गत्वा कंसं मारयित्वा तदीयपित्रे उग्रसेनाय राज्यं समर्पितवन्तौ। कंसस्य मारणं श्रुत्वा कुपितः जरासन्धः महत्या सेनया सह आवयोः उपरि आक्रमणार्थम् आगतवान्। निरायुधौ आवां तेन सह युद्धं कर्तुम् अशक्नुवन्तौ तस्य पुरतः

एव पादाभ्याम् अत्र आगतौ स्वः। अत्र सौभाग्यात् भवतः दर्शनं जातम्। अग्रे किं करणीयम् इति मार्गम् उपदिशन् भवान् आवाम् अनुगृह्णातु कृपया" इति प्रार्थितवान्।

तदा परशुरामः उक्तवान्- "भवतोः अत्र आगमनं जरासन्धः जानाति। अतः सः भवन्तौ अनुसरति एव। जरासन्धम् अहं सम्यक् जानामि। तं जेतुम् अनुकूलकरम् एकं दुर्गं समीपे अस्ति। भवन्तौ तत्र नेष्यामि। माम् अनुसृत्य आगच्छताम्" इति।



अनन्तरं ते त्रयः ततः प्रस्थितवन्तः। केषाञ्चित् दिनानाम् अनन्तरं ते गोमान्तनामकम् उन्नतं कञ्चन पर्वतं प्राप्तवन्तः।

"एषः च कश्चन महापर्वतः। एतस्य एकम् एव शिखरम् अस्ति। शिखरे स्थितं चेत् सूर्यस्य उदयम् अस्तं च समीपतः एव द्रष्टुं शक्यते। ततः समुद्रस्थाः बहवः द्वीपाः दृश्यन्ते। एतादृशे शिखरे स्थित्वा युद्धं कृतं चेत् जरासन्धं सुलभतया जेतुं शक्यते। तदनुयायिनः राजानः अपि पराजयं प्राप्य प्रतिधावेयुः। अत्र संशयः एव मास्तु" इति बलरामकृष्णौ उक्तवान् परशुरामः।

अनन्तरं ते त्रयः अपि वेगेन पर्वतम् आरुह्य शिखरं प्राप्तवन्तः।

"शत्रोः आगमनशब्दः समीपतः एव श्रूयते इव। अतः भवद्भ्यां जागरूकतया स्थातव्यम्। अहम् आगच्छामि तावत्" इति उक्त्वा परशुरामः ततः प्रस्थितवान्। बलरामकृष्णौ तम् महता आदरेण प्रेषितवन्तौ।

परशुरामस्य निर्गमनानन्तरं बलरामकृष्णौ पर्वतस्थासु गुहासु महाशिलानां मध्ये च किञ्चित्कालं सञ्चारं कृतवन्तौ।

तत्रत्यं प्राकृतिकं सौन्दर्यं मनोहरम् अपूर्वं च आसीत्। अनुसृत्य आगतं जरासन्धस्य सैन्यं जयघोषपूर्वकं पर्वतम् आक्रम्य अतिष्ठत्।

जरासन्धस्य सैन्ये शिशुपालः, रुक्मिः, चेकितानः, बाह्लीकः, द्रुपदः, विराटः,



उत्तमौजाः, जयद्रथः इत्यादयः राजानः आसन्। सर्वे अपि ते युद्धे विशेषतः आसक्ताः।

जरासन्धः तान् प्रमुखान् एकत्रीकृत्य उक्तवान्- "यादवकुमारौ एतस्य पर्वतस्य उपरि तिष्ठतः इति ज्ञातम्। पर्वतस्य आरोहणं यथा शक्येत तथा सोपानमार्गः दृश्यते। स च प्रथमं नाशनीयः। मया तत्र तत्र सृगहस्ताः सैनिकाः स्थापिताः सन्ति। यदि कोऽपि उपरि दृश्येत तर्हि ते तदुपरि सृगेण पाषाणान् क्षिपन्ति। शूलायुधानि अपि क्षिपन्ति। यदि आवश्यकता भवेत् तर्हि पर्वतः अपि चूर्णीकरणीयः। कथञ्चित् कार्यं संसाध्य एव प्रतिगमनम्" इति।

तदा शिशुपालः उक्तवान्- "एतं पर्वतम् आरोढुं देवैः अपि अशक्यम् इति श्रूयते। रथे ये सुखेन उपविशन्ति तादृशाः अस्मदीयाः राजानः कथं वा आरोढुं शक्नुयुः? सङ्ख्याबले विश्वस्य आक्रमणं कृतं चेत् स्वयम् अपायः स्वागतीकृतः भवेत्। बलरामकृष्णौ बालौ इति न भावनीयम्। इदानीं साक्षात् युद्धापेक्षया आक्रमणं दृढीकृत्य तौ अन्नपानादिकं यथा न प्राप्नुयुः तथा करणं वरम्। अन्यः अपि उपायः मम मनसि स्फुरति। पर्वतं परितः अग्निः ज्वालितः चेत् तौ कामपि प्रतिक्रियां प्रकटयितुं न शक्नुतः, कष्टे पततः च। अतः अग्निज्वालनम् उचितम्" इति।

चेदिराजेन शिशुपालेन सूचितः एषः उपायः जरासन्धाय अरोचत।

जरासन्धस्य आज्ञानुसारं सैनिकाः पर्वतं परितः तत्र तत्र शुष्कतृणानि, पर्णानि च एकत्रीकृत्य अग्निना ज्वालितवन्तः। अग्निज्वालायां काष्ठानि शुष्कतृणानि च पुनः पुनः स्थापितवन्तः। एवं पर्वतं परितः दावानलः प्रसृतः। अग्निज्वाला, धूमः च आकाशं स्पृशतः इव।

एतत् सर्वं दृष्ट्वा बलरामः- "अग्रज! पश्यतु, आवयोः कारणतः एतस्य पर्वतस्य कीदृशी दुर्गतिः आगता इति। एतत् दृष्ट्वा अपि मौनं स्थितिः अपकीर्तये एव खलु? अहम् इदानीम् एव तं जरासन्धं बाहुभ्यां

निष्पीडयिष्यामि। विभिन्नेभ्यः देशेभ्यः आगताः एतावन्तः राजानः आवयोः उपरि आक्रमणं कर्तुम् उद्युक्ताः यत्, तत् किं न्याय्यम्? भूमौ राजानः एव यथा न भवेयुः तथा करिष्यामि" इति कृष्णम् उक्त्वा पर्वतशिखरात् सेनायाः मध्ये अवप्लुतवान्। कृष्णः तम् अनुसृतवान्।

द्वयोः मन्दरपर्वतयोः युगपत् पतनेन समुद्रे विक्षोभः यथा भवेत् तथा बलरामकृष्णयोः पतनेन सेनासमुद्रे विक्षोभः जातः। अकस्मात् तयोः पतनेन सैनिकाः इतस्ततः पतितवन्तः। तौ अवप्लुतिसमये पादाभ्यां पर्वतशिखरं बलात् नोदितवन्तौ आस्ताम्। अतः पर्वतः किञ्चिदिव विचलितः। पातालगङ्गातः जलम् उद्गतम्। तेन दावानलः शान्तः अभवत्। सैनिकाः बहवः जलप्रवाहे निमग्नाः अभवन्।

एताभ्यां सोदराभ्यां प्रदर्शितम् अपूर्वं साहसं दृष्ट्वा सन्तुष्टाः देवाः आकाशमार्गम् आगत्य पुष्पवृष्टिं कृतवन्तः, विविधानि आयुधानि अधः पातितवन्तः च।

तस्मिन् समये कृष्णः विष्णुः इव,बलरामः आदिशेषः इव च दृश्येते स्म। तौ लीलया जरासन्धसेनां यत् मारयितुम् उद्युक्तौ तत् दृष्ट्वा राजानः भीत्या पलायनम् आरब्धवन्तः।

पलायनमग्नान् पुनः आहूय जरासन्धः- "वीराः कदापि शत्रुभ्यः पृष्ठं न प्रदर्शयन्ति।



ये रणरङ्गात् पलायन्ते ते भ्रूणहत्यापातकेन पीडिताः भवन्ति इति ज्येष्ठाः वदन्ति। महान्तः योद्धारः भवन्तः एव बालकयोः कुचेष्टां दृष्ट्वा यत् पलायनं कुर्वन्ति, इतोऽपि अधिकः अपमानः कोऽपि स्यात् वा? भवन्तः अत्रैव स्थित्वा माम् अनुसरन्तु। मयि स्थिते भवतां कोऽपि अपायः न भविष्यति। एतौ इदानीं मम बाणानाम् आहुतित्वं प्राप्नुतः" इति उच्चैः उक्तवान्।

एतत् श्रुत्वा ते राजानः पलायनविचारं परित्यज्य प्रत्यागत्य बलरामकृष्णौ पुनरपि आक्रान्तवन्तः।

एतावत्सु राजसु युगपत् एव अस्त्राणां शस्त्राणां च प्रयोगं कुर्वत्सु अपि



एततु वचनं श्रुत्वा जरासन्धः रथारूढः सन् कृष्णस्य समीपम् आगतवान्। सः कृष्णं दृष्ट्वा उक्तवान्- "मयि उपस्थिते तेषां राज्ञां निन्दनं किमर्थं करोति? युद्धं नाम पशुचारणं न। भवान् तु महापराक्रमशाली इति श्रुतम्। तत् मम पुरतः प्रदर्शयतु। तदा एव पराक्रमस्य सार्थक्यम्। क्षणमात्रेण भवन्तं यमसदनं प्रेषयिष्यामि" इति।

"मम पौरुषं ज्ञातुम् इच्छति वा? एतत् तु रणरङ्गम्। अहम् अपि सम्मुखे उपस्थितः अस्मि। शूराः वाचा पराक्रमं न प्रदर्शयेयुः। तेषां भाषा तु शस्त्रास्त्रम् एव" इति उक्त्वा कृष्णः जरासन्धस्य उपरि अष्ट बाणान्, तदीयस्य सारथेः उपरि पञ्च बाणान् च प्रयुक्तवान्।

तस्मिन् एव क्षणे बलरामः स्वकीयैः बाणैः जरासन्धस्य हस्ते स्थितं धनुः भञ्जितवान्।

जरासन्धस्य साहाय्यकौ सेनानायकौ कौशिकचित्रसेनौ युगपत् बलरामकृष्णयोः उपरि आक्रमणं कृतवन्तौ। युद्धम् अतिदारुणं प्रवृत्तम्। युद्धे जरासन्धः, कृष्णः, बलरामश्च बहुधा व्रणिताः।

जरासन्धस्य साहाय्यार्थम् अन्ये केचन शूराः आगताः। तथापि जरासन्धः कृष्णं सम्मुखीकर्तुम् अशक्तः सन् रणरङ्गात् प्रतिनिवृत्तः। अन्ये अपि तथैव कृतवन्तः। कृष्णः विजयसूचकं पाञ्चजन्यशङ्खध्वनिं कृतवान्।

बलरामकृष्णौ निर्भयेन स्थित्वा परितः स्थितान् सैनिकान् कदलीसस्यानि इव कर्तयन्तौ शवानां राशिं कृतवन्तौ।

राजानः क्रमशः किञ्चित् किञ्चित् पृष्ठतः गतवन्तः।

कृष्णः तान् उद्दिश्य उक्तवान्- "भवन्तः सर्वे वाहनम् आरूढवन्तः सन्ति। आवां तु भूमौ स्थित्वा युद्धं कुर्वः। तथापि भवन्तः पलायन्ते खलु? एतत् तु न उचितम्। सः जरासन्धः भवतः सर्वान् मृत्युमुखे प्रेरयन् स्वयं तु पृष्ठतः तिष्ठति। तस्य निमित्तं भवद्भिः किमर्थं मरणं प्राप्तव्यम्? तम् एव अत्र आनयन्तु। अहं मम पौरुषं प्रदर्शयिष्यामि" इति।

बलरामकृष्णौ 'पुनरपि किञ्चित्कालं गोमान्तगिरौ एव विश्रान्तिः अनुभोक्तव्या' इति आलोचितवन्तौ। किन्तु अत्रान्तरे एका विचित्रा घटना प्रवृत्ता।

जरासन्धम् अनुसृत्य सर्वे राजानः प्रतिगतवन्तः आसन्। किन्तु, चेदिराजस्य शिशुपालस्य पिता दमघोषः सेनया सह प्रत्यागत्य कृष्णं दृष्ट्वा उक्तवान्– "वत्स, कृष्ण! अहं भवतः मातुलान्याः पतिः। पितृतुल्यः अहं पितृवात्सल्येन वदामि। एषः जरासन्धः न सामान्यः। धूर्तव्यवहारे सः अग्रणीः। भवता सह वैरं मास्तु इति अहं बहुधा बोधितवान्। किन्तु सः मम वचनं न शृणोति। ततः भयं यदि मम न स्यात् तर्हि बहु पूर्वम् एव अहं तदीयं पक्षं त्यक्तवान् स्याम्। इदानीं पराजयं प्राप्तवतः तस्य पलायनं दृष्ट्वा आत्मीयान् सर्वान् भवद्विषये बोधितवान्। जरासन्धः अप्रतिमशूरः इत्यत्र सन्देहः एव नास्ति। सः पुनः कदा प्रत्याक्रमणं कुर्यात् इति वक्तुं न शक्यते। तत्तु भवतु तावत्, इतःपरम् अपि भवता किमर्थम् अत्र शवराशिसमीपे स्थातव्यम्? आगच्छतु, गच्छाम। समीपे एव करवीरपुरम् अस्ति। तस्य पालकः सृगालवासुदेवः भवते असूयति। तस्य गर्वः भञ्जनीयः एव। तदर्थम् अयं युक्तः कालः। तत्र पश्यतु, उत्तमं रथद्वयं तत्र तिष्ठति। तत् द्वयं भवन्तौ स्वीकुरुताम्" इति।

कृष्णः दमघोषं साभिमानं पश्यन्– "भवतः वचनं श्रुतवतः मम महान् सन्तोषः जातः। बन्धुप्रेम्णः एतत् असदृशम् उदाहरणम्। भवतः प्रीतिं प्राप्तवान् अहम् आत्मानं धन्यं मन्ये। भवादृशानां साहाय्यं यदि स्यात् तर्हि सर्वत्र जयप्राप्तिः न क्लेशाय" इति उक्तवान्।

अनन्तरं बलरामकृष्णौ दमघोषेण दत्तं रथम् आरुह्य दमघोषेण, तदीयेन सैन्येन सह च गत्वा ततः तृतीये दिने प्रातःकाले करवीरपुरं प्राप्तवन्तौ। करवीरपुरस्य समीपे एव सेनाशिबिरं स्थापितम्।





# त्रयः प्रश्नाः

विक्रमपुरस्य राज्ञः विनोदवर्मणः साहित्यशास्त्रे विशेषरुचिः। सः अधिकं समयं पण्डितगोष्ठ्याम् एव यापयति। शासनव्यवहारे साहाय्यकरूपेण भगिनीपुत्रं नागवर्माणं नियोजितवान् आसीत् सः। नागवर्मा तु शासनव्यवहारे सर्वत्र चञ्चूप्रवेशं कुर्वन् स्वेच्छया व्यवहरन् प्रजाः पीडयन् सन्तोषेण दिनानि यापयति। प्रजानाम् अश्रु मार्जयितुं कोऽपि न आसीत्।

दिनानि अतीतानि। कदाचित् नागवर्मणः मनसि काचित् दुरालोचना आगता यत् विनोदवर्माणं सिंहासनच्युतं कृत्वा मया एव सिंहासनारोहणं कर्तव्यम् इति। एतदनुगुणं सः कार्यम् अपि आरब्धवान्।

मन्त्री माणिक्यवर्मा नागवर्मणः कार्यं सदा सूक्ष्मतया परिशीलयन् एव आसीत्। एकदा सः महाराजम् एकान्ते दृष्ट्वा नागवर्मणः अव्यवहारं, चिन्तनरीतिं, दर्पप्रदर्शनं, स्वेच्छाप्रवृत्तिं च विस्तरेण निवेद्य– "महाप्रभो! इदानीम् एव युक्तः क्रमः न आश्रितः चेत् न केवलं प्रजानाम्, अस्माकम् अपि महान् अपायः भवेत्" इति जागरूकतावचनानि उक्तवान्।

विनोदवर्मणः तु बन्धुप्रीतिः अधिका। बान्धवाः विश्वासद्रोहं न कुर्वन्ति इति तस्य महान् विश्वासः। अतः सः मन्त्रिणः माणिक्यवर्मणः वचनेषु झटिति विश्वासं न कृतवान्। 'नागवर्माणं प्रत्यक्षम् आहूय विस्तरेण वार्तालापं कृत्वा वस्तुस्थितिः ज्ञातव्या' इति निश्चितवान् सः।

अनन्तरदिने राजा नागवर्माणं स्वसमीपम् आहूय मन्त्रिणा उक्तं समग्रं श्रावयित्वा "किम् एतत् सत्यम्?" इति तर्जनस्वरेण पृष्टवान्।

नागवर्मा राजानं नमस्कृत्य उक्तवान्– "अहं भवतः हानिं कर्तुम् अर्हामि वा? वस्तुतः तु भवतः कोऽपि श्रमः यथा न स्यात् तथा परिपालनं प्रचलेत् इति मम अभिप्रायः। अतः एव अहं सर्वत्रापि सम्यक् पश्यन् युक्ताः सूचनाः यच्छन् अस्मि। प्रजानां मध्ये सञ्चरन् तासां सुखदुःखादिकं विचार्य योग्यं परिहारोपायम् अपि चिन्तयामि। अतः एव प्रजाजनाः मद्विषये विशेषादरं प्रकटयन्ति" इति।

"मन्त्री यत् वदति तत् तु एतद्विरुद्धम् अस्ति खलु? द्वयोः वचनयोः मध्ये सोङ्गत्यं न दृश्यते?" इति उक्तवान् राजा विनोदवर्मा।

"प्रायः मया यानि सत्कार्याणि क्रियन्ते, ततः या कीर्तिः प्राप्यते तत् दृष्ट्वा मन्त्री असूयति। अतः एव तथा वदति इति मन्ये। किमर्थम् ऊहापोहः? प्रजाः सम्मेल्य तासाम् अभिप्रायं पृष्ट्वा भवान् एव सर्वं ज्ञातुम् अर्हति खलु?" इति उक्तवान् नागवर्मा।

एतां सूचनाम् अङ्गीकृत्य विनोदवर्मा उक्तवान्– "युक्ता सूचना एषा। श्वः एव प्रजानां सम्मेलनार्थं व्यवस्थां करोतु" इति।

'विनोदवर्मा प्रजानां सुखदुःखस्य विचारणार्थं सभाम् आयोजितवान् अस्ति' इति वार्ता सडिण्डिमघोषं सर्वत्र प्रसारिता। एतेन सहैव नागवर्मणः अनुचराः, प्रतिनगरं, ग्रामं ग्रामं च गत्वा– 'श्वः राजसभायां कोऽपि नागवर्मणः विरुद्धं किमपि यदि वदेत् तर्हि सः तद्दिने एव प्राणैः वियुक्तः स्यात्' इति उक्त्वा सर्वत्र भीतिं जनितवन्तः।



एतत्कारणतः राजसभायाम् उपस्थिताः सर्वे नागवर्मणः अभिमानिनः एव आसन्। ते राज्ये प्रचलन्ति अभिवृद्धिकार्याणि पर्वतीकृत्य उक्त्वा, अत्र सर्वत्र नागवर्मणः साहाय्यम् औदार्यं च प्रधानं कारणम् इति निवेदितवन्तः। मध्ये मध्ये नागवर्मणः स्तुतिं बहुधा कृतवन्तः अपि।

मन्त्री माणिक्यवर्मा प्रत्यक्षं प्रचलत् अन्याय्यं पश्यन् अपि असहायकतया मौनं स्थितवान्।

तदा विनोदवर्मा अपरिमितेन सन्तोषेण प्रजाः पृष्टवान्– "एवं तर्हि भवन्तः सर्वे सुखेन सन्ति। मम विषये, नागवर्मणः विषये वा देशे कस्यापि असमाधानं नास्ति इति अहं भावयामि। अत्र भवन्तः सर्वे सहमताः खलु?" इति।

एतस्य उत्तररूपेण नागवर्मपक्षीयाः सर्वे उत्साहेन करताडनं कृत्वा हर्षध्वनिम् उत्पादितवन्तः। तत्समये गोविन्दः नाम युवकः उत्थाय अग्रे आगत्य महाराजं विनयेन नमस्कृत्य उक्तवान्– "महाप्रभो! भवतः परिपालनस्य विमर्शनं कर्तुं मम अर्हता नास्ति। तथापि भवता अवकाशः दत्तः इत्यतः केवलं त्रीन् प्रश्नान् प्रष्टुम् इच्छामि। एतदर्थम् अनुमतिदानेन अहम् अनुग्रहणीयः" इति।

राजा तं युवकम् आपादमस्तकं दृष्ट्वा– "के ते प्रश्नाः भवतः? पृच्छतु तावत्" इति उक्तवान्।

"महाराज! देशस्य नागरिकाः दिने





प्रकटयितुम् अर्हति इति वार्ता श्रूयते। किन्तु वस्तुस्थितिः तु अन्या एव। कारागारे सहस्रशः जनाः बद्धाः सन्ति। केन कारणेन ते बद्धाः इति तु कोऽपि न जानाति। किं तैः अपराद्धम्? किमर्थम् एतादृशं दण्डनम्?" इति पृष्टवान् गोविन्दः।

राजा गम्भीरेण स्वरेण उक्तवान्– "एवं वा? भवतः तृतीयः प्रश्नः कः? कथयतु तावत्" इति।

गोविन्दः राजानं नमस्कृत्य उक्तवान्– "महाप्रभो! मम काचित् विज्ञप्तिः। तृतीयं प्रश्नं सद्यः एव मम पिता प्रक्ष्यति, न तु अहम्। एतदर्थम् अनुमतिः दातव्या" इति।

राजा गोविन्दं साभिमानं स्वसमीपम् आहूय प्रीत्या तस्य स्कन्धे हस्तं स्थापयन्– "देशहितसिद्ध्यर्थं भवादृशाः निर्भीकाः युवकाः एव अपेक्षिताः। भवतः प्रश्नद्वयस्य अपि तात्पर्यं मया ज्ञातम्। तयोः प्रश्नयोः उत्तरं कार्यरूपेण दीयते, न तु वचनेन। भवतः पित्रा पृच्छ्यमानः तृतीयः प्रश्नः कः इत्यपि मया इदानीम् एव ज्ञातम्। तादृशस्य प्रश्नस्य अवकाशः एव यथा न भवेत् तथा व्यवस्था क्रियते। भवान् निश्चिन्तः भवतु" इति उक्त्वा कांश्चन भटान् आहूय नागवर्माणं तत्सहकारिणः च तत्क्षणे एव बन्धने स्थापयितुम् आदिष्टवान्। नागवर्मपक्षीयेषु कोऽपि ततः निर्गन्तुं न शक्तवान्। दण्ड्यान् दण्डयतः महाराजस्य विवेकप्रज्ञां दृष्ट्वा

त्रिवारम् अपि आकण्ठं भोजनं कुर्वन्ति इति प्रचारः श्रूयते। तथापि अर्धात् अधिकाः जनाः प्रतिगृहं गत्वा किमर्थं भिक्षाटनं कुर्वन्ति? इति मम प्रथमः प्रश्नः। 'किं तादृशाः भिक्षायाचकाः प्रजात्वेन न परिगण्यन्ते?' इति बहूनां सन्देहः अस्ति। एतं प्रश्नं प्रष्टुं येषां धैर्यं नास्ति तादृशानां प्रतिनिधीभूय अहं पृच्छन् अस्मि" इति उक्तवान् गोविन्दः।

राजा कोपेन नागवर्माणं दृष्टवान्। नागवर्मा यावत् किमपि वक्तुम् उद्युक्तः तावता महाराजः गोविन्दं पश्यन् उक्तवान्– "भवतः द्वितीयः प्रश्नः कः?" इति।

"प्रभो! देशे सर्वत्र व्यक्तिस्वातन्त्र्यम् अस्ति, यः कोऽपि स्वाभिप्रायं निश्शङ्कं

मन्त्री नितरां सन्तुष्टः।

नागवर्मणा विना कारणं ये बन्धने स्थापिताः ते सर्वे तद्दिने एव कारागारात् विमुक्ताः अभवन्। राजा विनोदवर्मा तद्दिनतः राजकार्येषु स्वयम् अपि प्रवृत्तः सन् शासने शैथिल्यं दूरीकृत्य देशे सुखं शान्तिं च पुनः स्थापितवान्।

एतदनन्तरं कदाचित् मन्त्री माणिक्यवर्मा महाराजं पृष्टवान्– "प्रभो! नागवर्मा तत्पक्षीयाश्च राज्यशासनविषये स्वेच्छया व्यवहरन्तः अपि भवतः पुरतः सज्जनाः इव व्यवहरन्तः आसन्। तत्समये गोविन्दः केवलं प्रश्नद्वयं पृष्टवान्, तावदेव। तावता भवान् कथं वा वस्तुस्थितिं ज्ञातवान्? गोविन्दस्य पित्रा तृतीयः प्रश्नः यः पृच्छ्येत इति भवता तर्कितं स च प्रश्नः कः? तं च प्रश्नं मम पिता प्रक्ष्यति, न तु अहम् इति उक्तवान् गोविन्दः। एतत् किमर्थम्? तृतीयस्य प्रश्नस्य अवकाशः एव यथा न स्यात् तथा व्यवस्थां करोमि इति आश्वासनं दत्तं भवता। एतस्य अन्तरार्थः कः?" इति।

तदा राजा विनोदवर्मा मन्दहासं प्रकटयन् माणिक्यवर्माणम् उक्तवान्– "राज्ये नागवर्मणा या विकटपरिस्थितिः सृष्टा तां परिचाययन् गोविन्दः प्रश्नद्वयं पृष्टवान्। राजसभायां प्रश्नं पृष्टवतः आत्मनः मरणं स्वतःसिद्धम् इति सम्भाव्य तृतीयं प्रश्नं मम पिता प्रक्ष्यति इति उक्तवान्। 'मम पुत्रस्य गतिः का जाता' इति तदीयः पिता पृच्छेत् इति अहं ज्ञातवान्। नागवर्मणः व्यवहारविषये भवता पूर्वं सूचितम् आसीत् एव। तत् सत्यम् एव इति मया अवगतम्। अतः अहं झटिति कार्यप्रवृत्तः सन् नागवर्माणं कारागारे स्थापयित्वा गोविन्दस्य प्राणान् रक्षितवान्" इति।

त्रयः प्रश्नाः अपि अत्युत्तमाः देशहितसम्बन्धिनः च आसन्। एतादृशान् प्रश्नान् पृष्टवन्तं गोविन्दं तदीययोग्यतानुसारम् उत्तमे उद्योगे नियोजितवान् मन्त्री माणिक्यवर्मा।






# मातुः रहस्यम्

श्रीधरः नाम युवकः सुकन्या परिणीतवान्। तदीयः मातुलः सोमशेखरः अनारोग्यकारणतः विवाहदिने उपस्थातुं न शक्तवान्। मातुलस्य देहस्थितिः कथम् अस्ति इति ज्ञात्वा आगन्तव्यम् इति आलोच्य श्रीधरः कदाचित् गृहात् प्रस्थितवान्।

श्रीधरं स्वागतीकृत्य कुशलवार्तालापानन्तरं सोमशेखरः श्रीधरं पृष्टवान्– "दैवानुग्रहेण अहं क्रमशः स्वास्थ्यं प्राप्नुवन् अस्मि। भवतः कौटुम्बिकजीवनं कथम् अस्ति? विवाहः सद्यः जातः इत्यतः भवतः तु सन्तोषः स्यात् एव। तत् प्रधानं न। भवतः पत्नी गृहकार्येषु भवतः मातुः साहाय्यं करोति वा? तयोः मध्ये सामञ्जस्यम् अस्ति वा?" इति।

"साहाय्यं किं, गृहकार्याणि सर्वाणि मम पत्नी एव करोति। स्वयं विचिन्त्य एव समग्रं निर्वहति" इति उत्तरं दत्तवान् श्रीधरः।

"भवतः पितुः मरणानन्तरं तया जीवने बहुधा कष्टं सोढम्। तथापि सा धैर्येण स्थितवती। इदानीं तया सन्तोषमयानि दिनानि दृष्टानि इति तु महते सन्तोषाय" इति उक्तवान् सोमशेखरः।

किमपि वक्तुम् उद्युक्तः श्रीधरः सङ्कोचवशात् वक्तुम् अशक्तः सत् 'हुँ' इति ध्वनिं प्रकट्य मौनं स्थितवान्।

तदा सोमशेखरः उक्तवान्– "किमपि वक्तुम् उद्युक्तः इव भासते! कः विशेषः? मां वक्तुम् अपि सङ्कोचः वा? पत्नी अनुकूला खलु अस्ति? सर्वं निस्सङ्कोचं वदतु" इति।

"पत्नी तु सुतराम् अनुकूला एव। किन्तु तस्याः आगमनानन्तरं मातरि विशेषतः परिवर्तनं दृश्यते। सा इदानीं सदा चिन्ताकुला अन्यमनस्का च दृश्यते। न जाने, किं कारणम् इति" इति उक्तवान श्रीधरः।

"सुभद्रा"

"कारणं किम् इति न पृष्टवान् वा भवान्?" इति पृष्टवान् सोमशेखरः।

"मम प्रश्नतः पूर्वम् एव मम पत्नी यदा जलार्थं नदीं गतवती आसीत् तदा माम् आहूय सा हृदि स्थितं भावं मम पुरतः प्रकटीकृतवती। तदारभ्य अहं चिन्तायां निलीनः अस्मि" इति उक्तवान् श्रीधरः।

सोमशेखरः क्षणकालम् आलोच्य उक्तवान्– "मात्रा यद्यत् उक्तं तत्सर्वं प्रत्यक्षरं स्मरति खलु? तत् समग्रतया निवेदयतु" इति।

"तद्दिने प्रातः दशवादनसमये सा गृहस्य पृष्ठभागे स्थित्वा माम् आहूय पृष्टवती– 'भवतः पत्नी गृहे अस्ति, उत जलार्थं नदीं गतवती?' इति। 'इदमिदानीं घटं नीत्वा गतवती खलु सा? भवत्या न दृष्टा वा?' इति पृष्टवान् अहम्। 'एवं तर्हि उपविशतु' इति मां तत्रैव उपवेशितवती सा।

"पत्न्याः सौन्दर्यं प्रत्यक्षं न प्रशंसनीयं भवता" इति सूचितवती माता।

"किमर्थम्?" इति तां पृष्टवान् अहम्।

"तथा कृतं चेत् सा अचिरात् एव सौन्दर्योन्मत्ता भवेत्। क्रमशः भवन्तं लघुतया पश्येत् अपि" इति सूचितवती मम माता।

अहं तु मौनं स्थितवान्। तदा माता पुनः माम् उक्तवती– "पत्नी परमप्रिया एव भवेत् नाम, तथापि सर्वे विषयाः तस्याः पुरतः न वक्तव्याः" इति सूचितवती माता।




"उक्तं चेत् का हानिः?" इति मातरं पृष्टवान् अहम्।

"पात्रापात्रताम् अदृष्ट्वा सा सर्वेषां पुरतः गृहसम्बन्धि रहस्यम् उक्त्वा आकुलताम् उत्पादयेत्" इति सूचितवती माता।

अहं पुनरपि मौनम् आश्रितवान्। तदा माता पुनः उक्तवती– "सा अनुनयपूर्वकम् एव वदति चेदपि तया उक्तं सर्वं झटिति न अङ्गीकरणीयम्" इति।

"कः तत्र क्लेशः?" इति पृष्टवन्तं माम् उक्तवती माता– "परिणामः अनर्थकरः एव भवेत्। भवतः जन्मदात्रीं माम् एव सा गृहात् निष्कासयेत् अपि" इति।

पुनः मौनम् आश्रितवन्तं मां सा उक्तवती– "कदापि धनपेटिकायाः

कुञ्चिकां तस्याः हस्ते मा ददातु वत्स!" इति।

"किमर्थम्? कः अनर्थः सम्भवेत् तेन?" इति पृष्टवान् अहम्।

"तथा दत्तं चेत् रूप्यकाणि एकैकशः तस्याः मातृगृहं गच्छन्ति मूर्ख!" इति मां बोदितवती सा।

अन्ते अहम् कुतूहलेन पृष्टवान् एव– "एवं सर्वं सम्भवेत् इति कथं भवती ज्ञातवती?" इति।

"साधु! युक्तः प्रश्नः पृष्टः भवता। माता किम् उत्तरं दत्तवती?" इति हसन् पृष्टवान् सोमशेखरः।

"एतादृशं प्रश्नं मातरं प्रष्टुम् अर्हति वा भवान्? भवतः बुद्धिः नास्ति इति उक्त्वा माता गृहस्य अन्तः गतवती" इति सूचितवान् श्रीधरः।

सोमशेखरः क्षणकालं हसित्वा गाम्भीर्येण मौनम् आश्रित्य स्थितवान्।

श्रीधरः सोमशेखरम् आश्चर्येण पश्यन् पृष्टवान्– "मातुल! किमर्थं मौनम् आश्रितवान् भवान्?" इति।

"किं मया वक्तव्यम् इति भवतः अभिप्रायः?" इति पृष्टवान् सोमशेखरः।

"माता तत्सर्वं कथं ज्ञातवती इति मम इतोऽपि सन्देहः एव। तया तु कारणं न उक्तम्। भवान् जानाति चेत् वदतु तावत्" इति सूचितवान् श्रीधरः।

"कारणम् अहं जानामि। किन्तु तस्य ज्ञानेन भवतः किं प्रयोजनम्?" इति पृष्टवान् सोमशेखरः।

"तस्य ज्ञानेन मातुः चिन्तायाः कारणं मया ज्ञातं भवति। तदा अहं तस्याः चिन्ताम् अन्यमनस्कतां च दूरीकर्तुं शक्नोमि" इति उक्तवान् श्रीधरः।

"एवं तर्हि शृणोतु। सा मम भगिनी इत्यतः तस्याः रहस्यम् अहं जानामि एव। यद्यत् सम्भवेत् इति तर्कितं तत्सर्वं तया स्वविवाहानन्तरं कृतम् एव आसीत्" इति उक्त्वा उदरोपपीडं हसितवान् सोमशेखरः।





# निष्फलः वरः

कस्मिंश्चित् ग्रामे वरदा-श्यामलानाम्न्यौ उभे स्त्रियौ आस्ताम्। वरदा धनिककुलोत्पन्ना। अपरिमितम् ऐश्वर्यम् आसीत् तस्याः। किन्तु सा अतीव कृपणा। हृदयं च सर्वथा दयाशून्यम्।

श्यामला निर्धनकुले स्थिता। किन्तु तस्याः गुणाः उत्तमाः। हृदयं तु कुसुमकोमलम्। तयोः गृहं परस्परं सम्बद्धम् आसीत्।

एकदा कश्चन भिक्षुकः वरदायाः गृहस्य पुरतः स्थित्वा– "भवति, भिक्षां देहि" इति प्रार्थितवान्। उत्तरं किमपि न आगतम्। अतः सः हस्तेन द्वारशब्दं कृतवान्।

तदा द्वारम् उद्घाट्य बहिः आगता वरदा भिक्षुकं दृष्ट्वा कोपेन– "भिक्षायाचनं कुर्वन् अपि भवान् द्वारं ताडयति खलु? कियत् धाष्ट्यं भवतः? निर्गच्छतु इतः" इति गर्जनं कृत्वा अन्तः गत्वा असमाधानेन सशब्दं द्वारपिधानं कृतवती।

भिक्षुकः ततः निर्धनायाः श्यामलायाः गृहं गतवान्, द्वारशब्दं कृतवान् च। द्वारम् उद्घाट्य बहिः आगता श्यामला भिक्षुकं दृष्टवती। आत्मनः निमित्तम् एव पर्याप्तमात्रेण आहारे असत्यपि सा अन्तः गत्वा एकां रोटिकाम् आनीय भिक्षुकाय दत्त्वा– "एतत् खादतु, पानार्थं तक्रं ददामि। सर्वत्र अन्धकारः खलु? रात्रौ अत्रैव वसतु नाम" इति करुणया उक्तवती।

भिक्षुकः रोटिकां खादित्वा तक्रं पीतवान्। "अम्ब! मया गन्तव्यम् इदानीम्। भवत्याः जीवनं क्लेशं विना प्रचलति, उत महता क्लेशेन?" इति पृष्टवान् च।

"जीवने ऐश्वर्यम् अस्तु वा मा वा, तृप्तिः खलु प्रधाना? मम तु जीवनं तृप्त्या प्रचलति" इति उक्तवती श्यामला।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



"उदारता कदापि निष्फला न भवति। प्रातः आरब्धं कार्यं सायंपर्यन्तम् अनुवर्तिष्यते। अहम् आगच्छामि अम्ब!" इति वदन् सः भिक्षुकः ततः निर्गतवान्।

तेन तथा किमर्थम् उक्तम् इति श्यामलया न ज्ञातम्। सा तदीयं वचनं विस्मृतवती अपि।

अनन्तरदिने सा शय्यातः उत्थाय स्वसमीपे वस्त्रं कियत् अस्ति इति द्रष्टुम् इष्टवती। सा प्रतिदिनं वस्त्राणि वयति। तच्च विक्रीय प्राप्तेन धनेन जीवनं यापयति च।

सा पेटिकातः वस्त्रं बहिः आनीय वितस्तिपरिमाणेन 'एकं, द्वे' इति वदन्ती मापनम् आरब्धवती। किन्तु आश्चर्यं नाम यावत् आकृष्टं चेदपि वस्त्रं द्रौपद्याः शाटिका इव अक्षय्यरूपेण वर्धते एव!

"प्रातः आरब्धं कार्यं सायम्पर्यन्तम् अनुवर्तिष्यते" इति पूर्वदिने भिक्षुकेण यत् उक्तं तत् स्मृतवती श्यामला। सा आश्चर्यम् अनुभवन्ती भिक्षुकं देवं मन्यमाना भक्त्या मनसा नमस्कृतवती।

सूर्यास्तपर्यन्तम् अपि सा निरन्तरं वस्त्रमापनं कृतवती। एवं मापनं कृत्वा स्थापितस्य महान् राशिः एव दृश्यते गृहे।

एषा वार्ता ग्रामे अल्पे काले एव प्रसृता। जनाः अहमहमिकया तस्याः गृहम् आगत्य यथाशक्ति वस्त्रं क्रीत्वा गतवन्तः।

एवं विक्रीतं चेदपि तस्याः गृहे यथेष्टं वस्त्रम् अवशिष्टम् अभवत्। तत् विक्रीतं चेत् तया आजीवनं कदापि कष्टम् अनुभोक्तव्यं न भवेत्।

एवं श्यामलाम् आशिषा अनुगृहीतवतः भिक्षुकस्य वार्ता सर्वत्र प्रसृता। श्यामलया प्राप्तं सौभाग्यं दृष्ट्वा वरदा असूयाम् अनुभवति। 'सः भिक्षुकः मम गृहम् एव प्रथमम् आगतः आसीत्। असमाधानेन द्वारपिधानं कुर्वत्या मया प्रमादः कृतः। अहो दौर्भाग्यम्!' इति विलपितवती वरदा।

एवम् एव त्रीणि दिनानि अतीतानि। चतुर्थे दिने केनचित् क्रियमाणः द्वारताडनशब्दः वरदया श्रुतः। सा त्वरया आगत्य द्वारम् उद्घाट्य दृष्टवती। आश्चर्यं नाम स एव भिक्षुकः तत्र उपस्थितः अस्ति!

"आगच्छतु तात! आगच्छतु। तद्दिने भवतः आतिथ्यं कर्तुं न शक्तवती अहम्। किं करोमि, सहस्रशः कार्याणि मम। कार्यव्यग्रा अहम् असमाधानं प्रकटितवती स्याम्। तर्णकः कश्चन गोष्ठतः पलायितः आसीत्। तद्विषये चिन्तयन्ती अहम् भवद्विषये अनादरं प्रकटितवती स्याम् ..." इत्येवंरूपेण भिक्षुकस्य विषये महान्तम् आदरं प्रदर्शितवती वरदा।

'एषः यथा श्यामलां वरेण अनुगृहीतवान् तथैव आतिथ्येन तुष्टः माम् अपि अनुगृह्णीयात्' इति मनसा इच्छति वरदा।



भिक्षुकम् आदरेण अन्तः नीत्वा उत्तमे आसने उपवेश्य उत्कृष्टं भोजनं परिवेषितवती सा। पायस-मधुरभक्ष्यादिकम् अपि परिवेषितवती। भोजनानन्तरं हस्तप्रक्षालनार्थं कवोष्णं जलं दत्त्वा मार्जनार्थं वस्त्रम् अपि दत्तवती।

भोजनं समाप्य उपविष्टं भिक्षुकम् उक्तवती सा– "भोः, महती श्रान्तिः स्यात् भवतः। इदानीं रात्रौ अन्यत्र कुत्रापि मा गच्छतु। मृदलं तल्पं मञ्चस्य उपरि स्थापयिष्यामि। अत्रैव शयनं करोतु" इति।

किन्तु भिक्षुकः तत्र शयनं निराकुर्वन् गन्तुम् उद्युक्तः सन्– "मातः! प्रातः आरब्धं कार्यं सायंपर्यन्तम् अनुवर्तिष्यते" इति उक्त्वा ततः निर्गतवान्।

इदानीं वरदायाः आनन्दस्य सीमा एव नास्ति! तया तस्यां रात्रौ नेत्रनिमीलनं न कृतम्। 'प्रातः किं कृतं चेत् कीदृशः लाभः लभ्येत?' इति चिन्तयन्ती सा अस्वस्थमनस्का आसीत्।

'दधिमथनं कृतं चेत् नवनीतं यथेष्टं लभ्येत। ततः लाभः अपि महान् अस्ति एव। किन्तु सायंपर्यन्तं मथनं नाम महते क्लेशाय। अतः नवनीतस्य विषये चिन्तनम् एव मास्तु। तर्हि किम् अन्यत् करणीयम्?' इति आलोचयन्ती स्थितवती सा।

अन्ते एकः समीचीनः उपायः स्फुरितः। 'मम पेटिकायां कानिचन सुवर्णनाणकानि सन्ति। प्रातः सर्वप्रथमं तानि गणयिष्यामि। तदा सायंपर्यन्तं लक्षशः सुवर्णनाणकानि लप्स्यन्ते। अनन्तरं मादृशी भाग्यशालिनी

अन्या कापि न भविष्यति' इति निश्चितवती सा।

एतया आलोचनया आनन्दपरवशा सा सर्वथा निद्राम् एव न प्राप्तवती। सूर्योदयः कदा भवेत् इति प्रतीक्षमाणा पूर्वदिशः वातायनम् उद्घाट्य तस्याम् एव दिशि शिरः स्थापयित्वा शयनं कृतवती। उषःकाले कुक्कुटः रवम् अकरोत्।

वरदा झटिति उत्थाय मञ्चात् अवतीर्य पेटिकासमीपं गन्तुम् यावत् एकं पदं स्थापितवती तावता काचित् मधुमक्षिका वेगेन सशब्दम् आगत्य तां कण्ठे अदशत्। कुपिता वरदा मधुमक्षिकायाः मारणार्थम् उद्युक्ता। किन्तु सा मधुमक्षिका कुत्रापि अदृश्यतां गता। अत्रान्तरे अन्या मधुमक्षिका आगता, वरदां दष्टवती च।

भिक्षुकस्य आशीर्वचनानुसारं प्रातः आरब्धं मधुमक्षिकादंशनं सायंपर्यन्तम् अविच्छिन्नतया अनुवृत्तम् अभवत्।

वरदा तु महता कोपेन मधुमक्षिकाः ताडयितुं प्रयतते। किन्तु कुपिताः मधुमक्षिकाः सहस्रशः तत्र आगताः। तासां पीडनतः आत्मानं रक्षन्ती वरदा सर्वथा श्रान्ता। शरीरे सर्वत्र वेदना अनुभूयते तया।

वरदा यावता कष्टेन रात्रिं यापितवती ततोऽप्यधिकेन कष्टेन कथञ्चित् दिनं यापितवती।

वरदया वरानुग्रहः प्राप्तः इति विषयः ग्रामे सर्वत्र प्रसृतः आसीत्। अतः तया कीदृशः लाभः प्राप्तः स्यात् इति द्रष्टुम् इच्छन्तः ग्रामीणाः सर्वे तस्याः गृहम् आगतवन्तः। तस्याः दुरवस्थां दृष्ट्वा सर्वे हसितवन्तः।

सायङ्काले मधुमक्षिकाणाम् आगमनं स्थगितं जातम्। ग्रामीणाः अपि क्रमशः स्वगृहं गतवन्तः।

लज्जावशात् ग्रामे कुत्रापि मुखं प्रदर्शयितुम् अनिच्छन्ती वरदा तद्दिने एव ग्रामं परित्यक्तवती। मधुमक्षिकादंशनेन जातां वेदनाम् औषधद्वारा न्यूनीकृत्य सुदूरे स्थले निवासं कृतवती सा।



## प्रकृतिवैचित्र्याणि—



### उन्नतः अग्निपर्वतः

अर्जेण्टैनादेशे स्थितः 'अनानूकागुवा' नामकः कश्चन शान्ताग्निपर्वतः पश्चिमपर्वतश्रेणौ अस्ति। २२,८३४ द्वादशाङ्गुलोन्नतः एषः शान्ताग्निपर्वतः पश्चिमपर्वतश्रेणौ अत्युन्नतः इति परिगण्यते।



### उड्डयनचतुरः

फालञ्जर्जातीयः मार्सूपियल्नामकः प्राणी उड्डयने अतीवचतुरः। अग्रिमपादयोः तदितरपादयोः च मध्ये स्थितं चर्मपटलं विस्तार्य उन्नतात् स्थलात् दूरस्थम् अपरं स्थलं प्राप्नोति एषः— महता चातुर्येण।

### पङ्कमयी नदी



चीनादेशे पीतनदीं (यल्लो रिवर्) प्रपञ्चे एव अद्वितीयां पङ्कमयीं नदीं मन्यन्ते। नद्याः तीरद्वयतः पततः पीतवर्णस्य पङ्कस्य कारणतः एषा नदी पूर्वोक्तं नाम प्राप्तवती अस्ति।

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अग्रिमः - | Front |
| अधोधः - | Down and down |
| अन्यमनस्कता - | Inattentiveness |
| अवकिरति - | Hurls |
| अवप्लुतिः - | Jumping downwards |
| अशनिः - | Thunderbolt |
| आकाशः - | Space |
| आश्वासनम् - | Assurance |
| उत्पाट्य - | Having plucked |
| उष्णीषम् - | Head-dress |
| ऊहापोहः - | Wild guessing |
| कवोष्णम् - | Slightly warm |
| कोटरः - | Hollow of a tree |
| गोष्ठम् - | Cattle-shed |
| चिक्रोडः - | Squirrel |
| जम्बूफलम् - | Jambu fruit |
| तक्रम् - | Buttermilk |
| तरक्षुः - | Cheeta(Leopard) |
| तर्णकः - | Calf |
| तलम् - | Bottom |
| तुला - | A small unit of weight of gold or silver |
| दण्ड्यः - | Fit to be punished |
| निरवधिकः - | Unlimited |
| परिमितिः - | Limit |
| पीतम् - | Yellow |
| प्रकाण्डः - | Stalk |
| प्रतिनिधिः - | Representative |
| मधुमक्षिका - | Honey-bee |
| माति - | Measures |
| मेषः - | Sheep |
| रजतम् - | Silver |
| राक्षसगोधिका - | Dinosaur |
| वयति - | Weaves |
| वातायनम् - | Window |
| विक्षोभः - | Agitation |
| शशः - | Rabbit |
| सहमतः - | One who has consented |
| सहे - | Will endure |
| सामञ्जस्यम् - | Harmony |
| सृगः - | Catapult |

* *  * *

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां जनवरी-८९ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा नवम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'सप्टम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **करोमि दन्तधावनं ननु स्वदेहशुद्धये।**

द्वितीयचित्रम् - **क्षीरदोहनं मम परोपकारसिद्धये।**

प्रेषकः - सन्तोषः, द्वारा– एम्.आर्.एन्. शास्त्री, पत्रिकाकारः, नागमङ्गलम्, मण्ड्य, कर्णाटकम्।




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# एषो हि लोकः

योगीन्द्रः – ह्यः अभिन्नानन्दस्य उपन्यासं श्रुतवान् वा?

Did you listen to Sri Abinnananda's speech yesterday?

चैतन्यः – आम्। बहु समीचीनम् आसीत्।

Of course, I did. It was excellent.

यो – तस्य कण्ठस्वरः, निरूपणशैली, आकृतिः इति एकैकम् अपि आकर्षकम् एव। केचन वदन्ति खलु– सद्विषयेषु जनानाम् आसक्तिः नास्ति इति। तं वादं मिथ्याकरोति एषा सभा।

His intonation, style of presentation and his figure, each one of them is very impressive isn't it? There are some who say that people will not be interested in a subjectmatter of this kind, but the gathering proved the opposite.

चै – योगिन्द्र! भवतः भ्रान्तिः।

Yogindra! You are under a delusion!

यो – किमर्थं तथा वदति? तावता प्रमाणेन जनानां मेलनं यत् जातं तत् असत्यम् इति वा भवतः अभिप्रायः?

How do you say that? Do you say it is wrong to think that there were many people?

चै – तथा न। सर्वे तत्त्वं श्रोतुम् एव न आगताः इति एतावदेव मम कथनस्य आशयः।

Not that. What I mean to say is, all of them were not there to listen to the philosophy, that is all.

यो – एवं तर्हि तत्त्वविषये अनासक्ताः तत्र किमर्थम् उपस्थिताः?

Then for what else had those not interested in philosophy come there?

चै – केचन तस्य निरूपणशैलीं श्रोतुम्। अन्ये केचन कार्यान्तरं नास्तीति कृत्वा, अपरे केचन सम्मिलितान् दृष्ट्वा कुतूहलेन, इतरे केचन आत्मनः वैशिष्ट्यं प्रदर्शयितुम् ....

Some were there to watch his diction. Some because they had no other work. Some out of curiosity after seeing the gathering and others just to show off their importance.

यो – एषा वा वस्तुस्थितिः?

Is that the fact?

चै – मित्र! एषो हि लोकः!

Friend! That's the world.

अपूर्वं प्रीतिपात्रम् उपायनम्
सुदूरे पारेसमुद्रं निवसते
आत्मीयाय सुहृदे
दातुम् अर्हति भवान्

# चन्दमामा

**तया भाषया प्रकाश्यमानां चन्दमामाम् उपायनीकरोतु, या च रोचेत तस्मै–**

अस्सामी, बङ्गाली, आंग्लम्, गुजराती, हिन्दी, कन्नड, मलयालम्, मराठी, ओरिया, तमिळ्, तेलुगु, संस्कृतम्

**आत्मीयानां प्राप्त्या इव आनन्दम् अनुभवतु नाम सः।**

---

**वार्षिकं ग्राहकशुल्कम्**

**आस्ट्रिया-जपान्-मलेशिया-श्रीलङ्का देशानां**

समुद्रमार्गेण (By Sea Mail) रू. ८१/- विमानमर्गेण (By Air Mail) रू. १५६/-

**फ्रान्स्-सिङ्गपूर-यु.के.-यु.एस्.ए.-**
**पश्चिमजर्मनीदेशानां, इतरदेशानां चापि**

समुद्रमार्गेण (By Sea Mail) रू. ८७/- विमानमर्गेण (By Air Mail) रू. १५६/-

**भवदीयं धनम् अधस्तनसङ्केताय**
**D.D. द्वारा धनादेश (M.O.) द्वारा वा**
**'चन्दमामा पब्लिकेषन्स्' नाम्ना प्रेषयितुम् अर्हति–**



सर्क्युलेषन् म्यानेजर्
**चन्दमामा पब्लिकेषन्स्**
चन्दमामा बिल्डिङ्स्
वडपळनी, मद्रास्-६०० ०२६